पुस्तक - दुलाजन्मीयम्

1- पुस्तक का विषय - महाकाव्य

2- लेखक का नाम व पता -

डा० गोस्वामी कलभद्र प्रसाद शास्त्री

14, अशोक नगर, बरेली

3- संस्था का नाम जिसमे लेखक कार्यरत हो -

सेवानिवृत्त अपर परियोजना निदेशक

4- प्रमाण पत्र -

(क) मै प्रमाणित करता हूं कि मेरी उपर्युक्त रचना मौलिक है तथा प्रथम वार वर्ष 1993 मे प्रकाशित हुई है ।

(2) यह रचना शोध ग्रन्थ नहीं है ।

(3) मै जन्म से उत्तर प्रदेश का निवासी हूं ।

लेखक के हस्ताक्षर

श्रीः


# दूताञ्जनेयम्

## महाकाव्यम्



काव्य रचना—

**डा० गोस्वामी बलभद्र प्रसाद शास्त्री**

साहित्याचार्य, एम. ए.
पी-एच० डी०, साहित्यरत्न

भूमिका—

**डा० कृष्णकान्त शुक्ल**

एम ए. (हि. सं.) साहित्याचार्य, पी-एच. डी.
विभागाध्यक्ष संस्कृत, बरेली कालेज, बरेली।

अनुवाद—

**राजकमल गोस्वामी**

बी० एस-सी०, एल-एल० बी०
उप-निबन्धक

प्रकाशक—

**वाग्देवता प्रकाशन**

१४, अशोक नगर, बरेली (उ० प्र०)

**पूज्य मोरारी बापू का आशीर्वचन**

।। राम ।।

प्रसन्नता और प्रगति के लिए
प्रभु प्रार्थना रामसुमिरन के साथ
—"बापू"

---

काव्यस्यास्य प्रकाशनं राष्ट्रीय संस्कृत संस्थान नव देहली द्वारा प्रदत्तेनानुदानेन सम्पन्नम्।

प्रकाशक:
डा० वलभद्र प्रसाद शास्त्री
१४, अशोक नगर, नैनीताल मार्ग, बरेली उ० प्र० पिन २४३००५



प्रथम संस्करणम् १०००

प्रकाशन वर्ष: १९९३

मूल्यम्—

मुद्रक:
नारायन प्रिन्टर्स
१२, सादात मार्केट, नैनीताल रोड, बरेली (उ० प्र०)

महामहिम राष्ट्रपति डा. शंकर दयाल शर्मा 'दूताञ्जनेयम्' महाकाव्य का राष्ट्रपति भवन में विमोचन करते हुए

# समर्पणम्

— ❀ —

महनीयेभ्यः सप्रणामार्चितेभ्यः
पितृजनेभ्यः
महादेवी गोविन्द गोस्वामि महाभागेभ्यः
सबहुमानं समर्पितम्
काव्यपुष्पम्—

(१)

वात्सल्येन द्रवितहृदया याङ्कमारोप्य बालं,
माता स्वान्तःप्रभवसरसस्तन्यदानैरुदारा।
मां पुष्णन्तीं ललितवचनै र्वत्सला लालयन्ती,
दैवेनाल्पे वयसि विवशा या हृता दारुणेन ॥

(२)

भार्या दुःख व्यथितहृदयो ऽप्यादधद् धैर्यबन्धं,
स्नेहात् तातः सह करुणया यश्च बालानपुष्णात्।
यस्याशीर्भि र्मयि च सुरवाग् वर्तते सानुकम्पा,
काव्यं पित्रोर्भवतु च तयोर्नम्रपुष्पाञ्जलि र्मे ॥

*

महर्षि वेदविज्ञान विद्यापीठ कुलाधिपैः
साहित्य व्याकरण वेदान्ताचार्यैं महामहोपाध्यायैः
गुरुवर्यैः आचार्य श्री रामविलास शुक्ल महाभागैः
सद्यो विहिताशीर्वादाः

---

सुखेन जीव्यात् कुशलः प्रबुद्धः,
श्रीशोभितोऽनन्तगुणस्य सिन्धुः ।
वरेण्य एकः किल काव्य मार्गे,
लघुः शरीरेण महान् सुमत्या ।।
भणन्ति यं सम्प्रति कालिदासं,
द्रवन्ति यद्वाचि रसाः समस्ताः ।
प्रकर्ष एतस्य च राजधर्मे,
सार्थक्यमत्रास्ति समस्त कार्यम् ।।
दरिद्रतायाः प्रभवेन्न लेशो,
गोविन्दपुत्रो गुणवृन्द पूज्यः ।
स्वाराज्यभक्तः सततं प्रसन्नो,
मीलन्तु सर्वे रिपवो ऽस्य चाग्रे ।।

---

**बरेली नगरस्थ संस्कृत परिषदा विहिते अभिनन्दन समारोहे परिषदध्यक्षै माननीयै बरेली कालेज पूर्व संस्कृत विभागाध्यक्षै-र्गुरुवर्यैः आचार्य श्री लक्ष्मीचन्द्र कौशिक महाभागैः**



# विहिताशीर्वचनम्

विद्वद्वरेण्यः सुधियां गरिष्ठो,
गोस्वामि वंश्यः प्रथिताभिधानः ।
गोविन्दपुत्रो बलभद्रनामा,
विभ्राजते काव्यकृतां वरिष्ठः ॥१॥

सत्साहित्यिकवैभवं महदिद सारस्वतं यन्महः,
सारं तस्य समीक्ष्य लब्ध विविधोपाध्यादि संभूषितः ।
लिङ्गं किञ्च महापुराणमिति यत् क्लिष्टं विशिष्टं महत्,
सर्वं तत् त्वनुशील्य यो हि कृतवान् शोधं शुभं तात्त्विकम् ॥२॥

गीर्वाणवाणीं दृढ़यन समन्ततः ।
कुर्वन् समृद्धां च निजां सरस्वतीम् ।
प्रौढं प्रबन्धं च विलिख्य मार्मिकं,
सोऽयं सुधीर्दक्षतरत्वमाप्तवान् ॥३॥

यो विरचय्य नेहरू यशः सौरभमुत्तमम् ।
व्यधात् सुरभितं शश्वत् महाकाव्यात्मकं जगत् ॥४॥

चक्रव्यूहं व्यधाद् योऽप्यनुपममहसा भास्वरं भव्य भावैः,
भ्राजत् स्वोजस्वि काव्यं युवजनहृदयावर्जकं प्रेरकञ्च ।
प्रौढं दूताञ्जनेयं नव - जनकसुताभावकारुण्यपूर्णं,
विद्वद्वृन्दाभिनन्द्यं सहृदय हृदयै र्भावितं सत्कृतं च ॥५॥

हृद्यं यः सेतुबन्धं रघुवरसुकथावस्तु विश्लिष्य सम्यग्,
ऐतिह्यं युक्ति युक्तं सुललितकलितै र्यश्च बद्ध्वा दशाङ्कैः ।
अन्यत् कर्णाभिजात्यं त्वभिनव विधया काव्यदृष्ट्या विधाय,
दृश्ये काव्येऽपि रम्ये सहृदय महितां कोटिमध्यास्त भव्याम् ॥६॥

विविधैः कालिदासादिपुरस्कारैः पुरस्कृतः
अध्यगच्छत् प्रधीःसोऽयं यशसः कोटिमुत्तमाम् ॥७॥

संस्कृत परिषद्धन्या विदुषां समवायश्च धन्योऽयम् ।
यस्मादस्मै कृतिने पद्यपुष्पाञ्जलिर्दत्तः ॥८॥

# आत्म-निवेदनम्

अयमतीवानन्द सन्दोंह विषयो यदेतन्नव्यं राघवेन्द्रचारु चरित्राभिचित्रितं सुरगी:सुरभिसमन्वितं "दूताञ्जनेयम्" नाम महाः-काव्यं सहृदयहृदयानन्दनं प्रकाशमापद्यतेतराम् ।

मर्यादापुरुषोत्तमस्य प्रभो राघवेन्द्रस्य विश्वाभिवन्द्यं चरित्रं कविधुरीणैरनल्प कल्पना प्रसूभिः प्रतिभाभि. बहुशोगीयमानं छन्दोऽलङ्कार भावरसानुभूतिभूपरिगतं चापि सवथाऽपरिच्छेद्यमद्यापि नव्यानां कवीनां काव्याधारभूतं विद्यते ।

कवीनामुपजीव्यं महदेतदभिरामं राम चरित्रमधिकृत्य पूर्व— विरचितं मदीयं नाटकं सेतुबन्ध नाम बहुशोऽभिनन्दितं सुधीभिः सहृदयैः । तेन समुल्लसिताऽगाधेऽस्मिन् दिव्यचरिताम्बुनिधौ निमज्जती मुक्तारत्नान्वेषिणीयं कवेरस्य मनीषा राघवेन्द्रस्य मानवीय मनोभावनाभिभूतं वैदेहीविरहविषमवेदनाऽभिस्यूतं दयितसन्देशरस कान्तं दूताञ्जनेयं नाम यद्रत्नमासादितवती तदेवैतद् विदुषां करकमलेषु प्रस्तुतीकृतं वर्तते। तेषां धिषणाशाणमेव निर्णेष्यत्यस्य सद्रत्नत्वं सहृदयहृदयहाराहर्त्वं नवा ।

रामचरितामृतविन्दुनिष्यन्दि काव्यमेतद् मारुते दयित सन्देशदौत्यप्राधान्यात् तदनुरूपमेव दूताञ्जनेयनामधेयेनालङ्कृतं सहृदयैरुनुमोदनीयमेव । दयित विरहव्यथानुभूति मानवीयवेदना विवशतामभिव्यञ्जयत्यपि विरहेऽस्मिन् न सामान्य जन वियोग रोदनमात्रम्, अपितु शौर्योद्दीप्तस्य रघुवंशीय क्षत्रियस्य रोषाक्रोशा—नलाभितप्तं शत्रु संहार प्रतिश्रुतञ्चापि सहृदय पाठकस्य मनस्यामोद सौरस्यमुत्पादयत्येव । तथैव वनपरिसरादपहृताया विवशाया अपि रावणातङ्क सन्मुखेऽपि निर्भीकाया वीर भार्याया सीतायाः सन्देशे व्यथानिवेदनेन सहैव प्रतिशोधप्रक्रियार्थं यदाक्रोशावेगस्तच्चाप्यसा-मान्यं भारतीयनारी चरित्रं सुतरां प्रभावयेदिति मन्यामहे ।

प्राधान्येन मनोहरैर्मन्दाक्रान्ता छन्दोभिर्निबद्धं सहृदयहृदयावर्जकैः क्वचिद् विरहव्यथा वचन विन्यासैःक्षण क्षणे नव्य भावोन्मेषै र्वर्षाशरद्वर्णनोद्दीपनैः क्वचिदपि समाज चेतना सन्देशदर्शनैः काव्यमेतत् सुधीहृदयमामोदयेदिति प्रभुं प्रार्थयामहे।

माननीयैर्गुरुवर्यैर्महामहोपाध्यायैः आचार्यं श्री राम विलास शुक्लमहाभागैराचार्य श्री लक्ष्मीचन्द्र कौशिक महभागैः तथैव श्रीराम चरित गायनार्जितयशोविभवैः श्रीमोरारीबापू महोदयैः विहितशुभाशीर्भिः सम्वलितमेतत् काव्यं बरेलीस्थ बरेली कालेज संस्कृत विभागाध्यक्षैः डा० कृष्णकान्त शुक्ल महोदयैः भूमिकया समीक्षितं समलङ्कृतं विद्यते। एतेषां महाभागानां कृपाभाजनमेष कविवराकः कृतार्थीभूतमात्मानं धन्यं मन्यमानो बहुशःकृतज्ञतामेव ज्ञापयति। विभागीय कार्येष्वनवरतव्यस्तेनापि पुत्रेण उपनिवन्धकेन राजकमल गोस्वामिना यदस्य काव्यस्यानुवादे प्रयासो विहितस्तत्कृते सुरवाणीं प्रत्यस्यानुरागतया मद्हृदयमानन्देनाशिषं वितरति।

गिरिश्रृङ्गारोहणलब्धयशोभिः श्रीगोपाल शर्मं महोदयैः प्रतीकात्मकं काव्यस्य मुख पृष्ठं चित्रीकृतम्। यथा अग्रे गदाप्रतीको दौत्यमनुसरन् हनुमान् पृष्ठे बाण प्रतीकः स्वयं राघवेन्द्रः, एवमेव सीतासन्देश प्रतीकश्चूडामणिः तथैव रामसन्देशप्रतीकरूपामुद्रिका श्री शर्मणोऽभिनवं कलाशिखरारोहणं व्यञ्जयति। तत्कृतेऽनिर्वचनीयो हृदि स्नेह एव पर्यवस्यतीति।

काव्यस्यास्य वैशिष्ट्ये नातितरां वक्तव्यं यतः—

'नहि कस्तूरिकामोदःशपथेन विभाव्यते'

इतिशुभम्

विदुषामनुचरस्य

**गोस्वामि बलभद्र प्रसाद शास्त्रिणः**

# पुरोवाक्

हरदोईजनपदे त्र्यम्बकाधिष्ठित 'सकाहा' ग्रामजन्मभाजां, गोस्वामिबलदेवपादानां पौत्रेण महादेवीगर्भसम्भूतेन, श्रीगोविन्दपुत्रेण, वाग्देवीवराप्तवाग्विभवेन, कालिदासादिपुरस्कारालङ्कृतेनोच्चराज-पत्रित- सेवानिवृत्तेन, एम. ए., डाक्टरोपाधिविभूषितेन प्रख्यातेन मूर्धन्यमहाकविना, आचार्यबलभद्रप्रसादगोस्वामिना विरचितं 'दूताञ्जनेयम् महाकाव्यं'[1] सहृदयानां करकमलेषूपायनीभूतं सत् कामनन्यसाधारणीं मुदं विच्छित्तिं च जनयति।

इतः पूर्वं महाकवेरस्य 'नेहरुयशःसौरभम्' महाकाव्यं, चक्रव्यूहम्' 'सेतुबन्धम्'- 'कर्णाभिजात्यम्' इति नाटकद्वयं सहृदयानां हृदयानि नितान्तमावर्जयन्।

यद्यपि काव्यस्यालोचकानां पात्रताया विषये मान्यैः कविवर्यैर्या सीमा निर्धारिता[2] सा 'उभयतः पाशरज्जुरिव' वर्तते तथापीमामविगणयन् गुणाधिक्ये वस्तुनि मौनिता विगर्हणीये-त्यभियुक्तोक्तिं मनसि निधाय, यथामति, किमपि व्याहरामि।

दूत आञ्जनेयो यस्मिन् काव्ये तद् 'दूताञ्जनेयम्' इति व्युत्पत्या महाकाव्येऽस्मिन् चतुर्दशसर्गाः कविपरिचयस्यैकादश श्लोकान् संयोज्य ४६३ श्लोकाश्च सन्ति। कथावृत्तं च प्रधान्येन रावणेनापहृतायै सीतायै विरहव्याकुलस्य श्रीरामस्य हनूमता प्रदत्तेन सन्देशेन सीतायाश्च प्रति-सन्देशेन सम्बन्धितमस्ति। आनुषङ्गिकरूपेण सर्वापि रामकथात्र विराजते कविवरेण्यैश्चिराद् बहुशो गीता श्री सीतारामकथाऽस्मिन् काव्ये केनापि मनोज्ञेनाभिनवेन[3] रूपेण प्रस्तुता सती सहृदयान् रसाम्बुपूरे निमज्जयति।

---

(१) दूताञ्जनेय-पुष्पिका, पृ. १५८

(२) एतत्काव्यं कलुषहृदयैनाप्यसूयासमृद्धैः
पादन्यासे शिशुगतिमयैः काव्य शिल्पेऽप्यबोधैः।
आलोच्यं वै सहृदयजनैः सुप्रबुद्धैः रसज्ञैः—
येषां भाग्ये सरसहृदयं, देवगीः. सन्मनीषा (तदेव १४/३७)

(३) दूताञ्जनेयमिदमार्यकवीन् प्रणम्य
गोविन्दसूनुरकरोन्नवरामकाव्यम्॥ (तदेव १४/४०)

काव्यस्य प्रतिपाद्यं कविः स्वयमेव विशदयति—



काव्येऽस्मिन्नुभयावियोगविषमोत्कण्ठाभिसन्तप्तयोः,
सीताराघवयोः सरोषमनसोराक्रोशसंवेदनम् ।
सन्देशं कपिराहरन् दयितयोर्यद् दौत्यमार्यो व्यधात्
तद् भावैर्ललितैर्यथामति कविः श्लोकैः समायोजयत् । (१/६)

किञ्च—

विक्षोभो हृदि धन्विनः परिभवः शौर्यस्य संवेदिनो-
ऽप्यन्तः स्नेहकथाव्यथा विरहजाप्यार्यप्रतिज्ञा तथा ।
नारीमानधनापहर्तु रचिराद् विध्वंसनं रक्षसो
दौत्यं चापि कवेः कवित्वकलितं दूताञ्जनेयं कवेः ॥ (१/७)

अस्मिन् काव्ये विरहेणाकुलस्य कस्यचित् प्राकृतजनस्य रोदनमेव नास्ति, अपितु राक्षसेन्द्र विनाशाय रामेण कृता सत्या सन्धाऽस्य सौन्दर्यं संवर्धयति—

नास्मिन् काव्ये प्रकृतवपुषो रोदनं विप्रयोगे
शौर्योदीप्तप्रखरमहसो राघवेन्द्र प्रियायाः ।
कौटिल्येन प्रसभहरणं राक्षसेन्द्रेण येना—
क्रोशो रोषः प्रणमपि हठात् धन्विनः क्षत्रियस्य ॥

रामस्य विरहविधुरावस्था षष्ठसप्तमसर्गयोर्हृदयं द्रवयति । रामः स्वकीयं सन्देशं कियत्या मार्मिकतया समुपसंहरति—

अयमजनि नितान्तं निस्सहायोऽद्य रामः,
प्रियसखि ! जगतोऽस्य शून्यता मां वृणोति ।
मम हृदयदशां वै त्वां विना कोऽवगन्तुं
प्रभवति मनसस्ते तां यथा मां विना कः ॥ (७/३०)

सीताया वेदना दशमैकादशसर्गयोरुपनिबद्धेन प्रतिसन्देशेन चरमां कोटिमाटीकते—

भवति पापकृतां मरणोत्तरं,
नरकघोरभयावहयातना ।
परमहो सकलामपि तामिहा
हमनुभूतवती ननु जीविता ॥ (१०/२९)

नारीगौरवमस्य काव्यस्य प्राणभूतम् । तस्या माहात्म्यं कविर-नन्यहृदयेनोद्भावयति—

मङ्गल्येयं रणविजयिनी शक्तिराद्या जगत्यां
नारी प्रोक्ता पुरुषजननी वीरसूरन्नपूर्णा ।

धर्मं या सम्भरणनिपुणा धारयन्ती धरित्र्या—
मन्तर्वृत्या रचयतितरां लोकनिर्माणमेषा ॥ (१०/२२)

× × ×

नारी प्रातर्विकचकमलं गुञ्जनं षट्पदानां,
सौन्दर्यश्रीः सुरभिसमये चन्द्रिका शारदीया ।
श्रङ्गारोऽसौ नवरसविधौ काव्यमेषा कवीनां,
शोभा भावादिषु परिणतिः सत्कलाया विधातुः ॥ (१०/२४)

राक्षसानां जीवनपद्धतिं कविर्विस्तरेण वर्णयति[4] । तेषां परिभाषां कुर्वन् स राममुखेन प्रस्तौति—

ये देवव्रतपूजनैरपि तपोवृत्यार्जयन्ति स्वतः,
मूढा भौतिकसाधनानि विभवानैश्वर्यभोगानपि ।
मत्तास्ते सततं वपन्ति च विषं पापा जगज्जीवने,
धर्मध्वंसिन एव लक्ष्मण! धराभारा हि ते राक्षसाः ॥ (७/२८)

कवेर्दार्शनिकता स्थलेस्थलेऽवलोक्यते । रावणस्य सभायां हनूमतो वार्तालापे व्यवहार-दर्शनयोरस्त्यनुपमो विलासः—

अर्था इन्द्रियमण्डलं च विषयानेतन्मनः कर्षति,
बुद्धिश्चेद् विकृता करोति सततं दुर्निग्रहं मानसम् ।
पश्यंस्तत् परमेशमात्मनि धियं संस्कृत्य लङ्केश्वर !
सन्मार्गं नयतां मनो व्यसनतो जीवंश्चिरं निस्पृहः ॥ (१२/१२)

× × ×

श्रेयः पार्श्वमुपैति जीवनभृतां प्रेयोऽपि तज्जीवने
विज्ञश्चात्र तथापरत्र शुभदं श्रेयो वृणोति स्वयम् ।
योगक्षेमकरेषु लौकिकसुखेषु श्रद्धधानो भुवि,
भुञ्जानः पशुवद् विलासमपरं प्रेयश्च मूढो जनः ॥ (१२/१६)

काव्यसौन्दर्यदृष्ट्या काव्यमिदं सहृदयानां हृदयं बलादाकर्षयति । रसाभिव्यञ्जनदृशा विप्रलम्भशृङ्गारोऽङ्गी । अलङ्काराणाम्

(४) तदेव ७/२२—२७, ९/१९, १०/१५, १६

'अन्यूनानतिरिक्तत्वमनोहारिण्यवस्थितिः हृदयं प्रसादयति । शब्दालङ्काराणामथ च उपमारूपकार्थान्तरन्यासोत्प्रेक्षा काव्यलिङ्गसहोक्ति-समासोक्तिव्यतिरेकादीनामर्थालङ्काराणां साधु प्रयोगः कवेरलङ्कार योजनापाटवं स्फुटमुद्घोषयति । 'बाणबन्ध' (१२/३७)-'चापबन्ध' (१३/२१)- 'खड्गबन्ध' (१३-२२)- 'चक्रारबन्धानां (१४/३१) प्रयोगः कवयितुश्चित्रकाव्यनिर्माण-सामर्थ्यं प्रथयति ।

उपमाया एकमुदाहरणं निभालनीयम् । श्रीरामः सीताविरहितायाः पर्णशालायाः स्थितिं चित्रयति—

प्रातर्यालङ्करणसुभगा मानिनीवल्ललामा,
साभूत् क्षीणा विरहलुलिता त्वां विना पर्णशाला ।
चौरैः सद्यः परिहृतधनं गेहमासीच्छरीरं
वात्याचक्रैरुपवनमिव ध्वस्तमासीन्मनो मे ॥ (६/२३)

वैदर्भीरीतिः प्रसादगुणश्च परस्परं श्लक्षणतया सङ्गतौ । कविवर्णनीयस्य विषयस्य चित्रमिवास्माकं समक्षमवतारयति । यथाशोकवाटिकायां सीतावर्णनप्रसङ्गे —

तत्रोद्याने व्यथितहृदयाशोकमूले निषण्णा
तप्ता दुःखप्रभवदहने शोकमूर्तिस्वरूपा ।
हेमन्ततौं तुहिनपिहिता चन्द्रलेखेव दीना
दृष्टिं याता जनकतनया दुर्दिने जाह्नवीव ॥ (४/१९)

राम-सीता-हनूमतां चरित्राङ्कनं कविना धार्मिकदृष्ट्यैव प्रायः कृतम् । श्री रामः साक्षात्, परब्रह्म सन्नपि विश्वमाङ्गल्य हेतोरवतरति[५] । सीता रामं छायेवानुसरति ।[६] समग्रयोर्नवमदशमसर्गयोस्तस्या विविधरूपाण्यस्माकमक्ष्णोः समन्तादवतरन्ति । हनूमान् महावीरः, सीतारामयोः परमभक्तो, दूतोचितगुणान्वितः, कुशलवक्ता, विदग्धश्चास्ति । तस्य वाक्पटुता, तर्कपद्धतिः, निर्भीकतादयो गुणा द्वादशे सर्गे रावणेन साकं कृते संवादे समवलोक्यन्ते । श्रीरामस्य लङ्कातः प्रत्यावर्तन समये, भरतं प्रत्यपि स दूतत्वेन गच्छति । तस्य दूतता सर्वस्मिन्नपि महाकाव्ये व्याप्तास्ति ।

सुभाषितरत्नानि काव्यमिदमुद्योतयन्ति ।[७] तेषु श्रीमद्भागवत-

---

(५) तदेव—१/६—२१, १२/७, २४
(६) ,, १/२२—२४
(७) ,, २/२८, ३/६, ४/६, ४/१४/१८, ६/१८, ७/२०, ७/२६, ८/२, ६/५, १०/७, १०/२०

गीतोपनिषदादिग्रन्थानां, कालिदास भवभूति प्रभृतीनां चिरन्तनकवीनां, तुलसीदासकेशवदासादि हिन्दी-कवीनां भावानां प्रभावो बहुषु स्थलेषु स्पष्टतयाऽवलोक्यते। वर्तमानसमस्यानां चिन्तनमपि स्वकीयं प्रभावं तत्र निदधाति।

द्वितीय-तृतीयसर्गयोः प्रकृतेः प्रायेणोद्दीपकरूपेणैव वर्णनमस्ति तथापि तन्मयतयावतारितानि कानिचिच्चित्राणि हृदयं मोहयन्ति। इदं रात्रिवर्णनं कियन्मनोहारि—

श्यामा रात्रिर्विचरति धनैः केशजालैः रुदन्ती
शून्येऽरण्ये सजलनयना चातकार्तस्वरेण।
यस्याः प्रेयान् क्वचन दिवसः सन्ध्यया सानुरागः
शोकोद्विग्ना विवशविकला किंनु कुर्यादधीरा ?[8]

कवेर्जीवनदर्शनं काव्ये सर्वत्र प्रसृतम्। स सज्जनानां दुर्गत्याऽसज्जनानां च सम्पत्या क्षुब्धोऽस्ति[9] परं दुष्टानामिममुत्कर्षं स स्थायित्वेन न स्वीकरोति—

वहति को न बलं पथि सञ्चरन्
ननु सतां सततं विधिसम्मते।
अपि समस्तविभूतिभिरन्वितः
पतति कुत्सितमार्गमनुव्रजन्॥

कुर्वन्नघं सततमस्तनयो मदान्ध
आतङ्कपङ्कमलिनां तनुते तमिस्राम्।
जानाति नैष ननु भास्कररश्मिरेको
ऽप्यालोकयत्यखिल विश्व दिगन्तरालम्॥[10]

रामराज्यस्य प्रशंसायां कविराधुनिकीं शासनपद्धतिमालोचयति—

राज्यं लोकभरं वहन् शिरसि वै राजा महद् दुःसहं,
जागर्त्येष निशासु यासु च जना निश्चिन्तिताःशेरते।

---

(८) तदेव—२/१६

(९) किं वा ब्रूयां नियतिविवशं, वर्तते विश्वमेतद्,
भाग्यं चैतद् विलसतितरां कीदृशं मानवानाम्।
धर्माचारा विपदि विकलाः काननेषु भ्रमन्ति,
भोगासक्ताः सुखदशयने शेरते पापचर्याः॥ (तदेव १०/६)

(१०) तदेव—११/३८—३१

एतत् कण्टकमवनं च मुकुटं शूलं च सिंहासनं,
यः सम्यक् सुकृतैर्बिभर्ति जनतां भूभृत् स एकावनेः ॥ (१४/२२)

× × ×

भ्रष्टाचारमहार्घतापणगता, संसाधनाभावता
नारीणामवमाननार्थिषु यदा न्यायक्रिया दुर्लभा ।
स्वार्थप्रेरितशासकाः यदि जनानुत्सादयेयुस्तदा
राजा चाटुकरैर्वृतो विकृतवाग् राज्यात् स्वयं भ्रंशते ॥
(१४/२५)

इदं काव्यं दूतकाव्यपरम्परायामायाति । प्रायेण दूतकाव्यानि प्रबन्धात्मकगीतिकाव्यशैल्यामसर्गबद्धान्येवोपलभ्यन्ते, परं गोस्वामिमहाभागैः 'दूताञ्जनेयम्' महाकाव्यत्वेनोपनिबद्धम् । फलतो महाकाव्योपयोगि कलेवरं दृशि निधाय तैः सन्देशस्य सर्गेषु विभाजनं कृतम् राम सन्देशः ६,७,८ सर्गेषु विभक्तः, सीतायाः प्रतिसन्देशश्च ९,१० सर्गयोः । अनेन सन्देशस्यैकतानता बाधितेवानुभूयते । 'सीतान्वेषणं' ४-५ सर्गयोर्निबद्धम् । मङ्गलाचरणाय सम्पूर्णः प्रथमः सर्गः प्रदत्तः । सम्पूर्णा रामकथापि प्रकारन्तरैरुपन्यस्ता । एभिः संविधानकैः शास्त्रदृष्ट्या महाकाव्यलक्षणानि तु घटितानि परन्तु भावानुभूतेस्तीव्रताऽवरुद्धेव प्रतीयते ।

कवेर्भाषा सरला, हृद्या, व्याकरणसम्मता च तथापि 'जटायुम्'* (७/२) इति पदं चिन्त्यतामर्हति । "मङ्गलादीनि मङ्गलमध्यानि मङ्गलान्तानि च शास्त्राणि प्रथन्ते" इत्यादर्शे सत्यपि ४/१०, १२/५ श्लोकयोर्मध्येकथमाशीर्वादात्मकमङ्गलाचरणस्य प्रयोगः, १/३०, १४/३४ श्लोकयोः पौराणिकीं पद्धतिमवलम्व्य व्याहृता 'फलश्रुतिश्च काव्यकलानुरूपा भवतीति संशयास्पदम् । एकादश-द्वादशसर्गयोर्नामकरणं कविना कथं न कृतमिति नैव ज्ञायते । रावणवधानन्तरं श्रीराघवं प्रति प्रयान्त्याः सीताया मनसि १३/२८-३६ श्लोकेषु याऽपराधभावना कविना चित्रिता सा न युगानुसारिचेतनानुरूपा, विशेषतो यदाऽग्निपरीक्षायाः प्रसङ्ग एवं सर्वथोपेक्षितो रामस्य हृदयस्थानस्य साधारण्युदारता च प्रदर्शितेत्यस्माकं चिन्तनम् । सम्भाव्यमानानां काव्यस्खलितानां विषये कविना स्वयमेवोक्तमस्ति—

---

*जटायु शब्दो "मृगय्वादयश्च" १/३० उणादि सूत्रेण साधु सिध्यति । आप्टे शब्दकोषेऽपि पठितः । इति कविः ।

"गतिमन्विष्यतो मार्गे काव्येऽरण्येऽप्रमादिनः ।

स्खलतिस्तु पदन्यासे कवेः सिंहस्य व क्वचित्" ॥[11]

किं बहुना ? आप्यायितं सन्देशगरिम्णा, समुद्योतितं नारीमाहात्म्येन, भावितमर्थगौरवेण, आप्लावितं रसातिरेकेण, भ्राजमानमलङ्कारैः, संवलितं वैदग्ध्येन, गुरूकृतं दार्शनिकतया, चित्रीकृतं बन्धविशेषैः, आमोदितं प्रकृति-वैभवेन, प्रतिष्ठितं रामराज्यावधारणया, विक्षुब्धं राक्षसकदर्थनाभिः, समृद्धं सूक्तिसम्भारेण। ओतप्रोतमुदारजीवनदर्शनेन, विराजितम् आदर्शैः, तुन्दिलं भव्यवर्णनैः, विलसितं कविभारत्या, प्रसन्नं शैल्या, प्रसृतं मन्दाक्रान्तप्रायया छन्दःसरण्या, सुवासितं दाम्पत्यप्रेम्णा महाकाव्यमिदं सहृदयानां कण्ठहारायिष्यत इत्यत्र नास्ति संशीतिः।

'कविकर्माकिररत्नान्वेषी'[12] नूनमयं कवि बाल्ये स्वयातितया विवशया जनन्या परित्यक्तो वरदाया मातुः सरस्वत्या उत्सङ्गं प्राप्तः[13] संवर्धितः प्रेयसे, श्रेयसे[14] च काव्यनिर्माणं करोति । स्वमेवाभिलक्ष्य मन्ये स व्याहरति—

सहृदयहृदि संवेद्या सरसा सगुणाप्यलङ्कृता कविता ।[15]
जयति चिरं विलसन्ती लोकेऽस्मिन् कस्यचित् सुकवेः ॥

महाकवेरस्येयं सहृदयहृदयसंवेद्या सरसा, सगुणा कविता चिरं जीव्यादित्याशास्ते—

(डा०) कृष्णकान्त शुक्लः
बरेलीस्थ बरेली कालेजे
संस्कृतविभागाध्यक्षः ।

वर्ष प्रतिपदा, संवत् २०५०
दि० २४/३/१९९३

---

(११) तदेव—१४/३६,
(१२) कवि परिचयः—९, (१३) १०, (१४) ११
(१५) दूताञ्जनेयम् १/४

# अनुक्रमणिका



## शुद्धिपत्रम्

| पृ. सं. | श्लोक सं. | अशुद्ध | शुद्ध | पृ. सं. | श्लोक सं. | अशुद्ध | शुद्ध |
|---|---|---|---|---|---|---|---|
| ९ | २७ | श्रङ्गो | शृङ्गो | १०३ | २२ | जगत्यां | धरित्र्या |
| १४ | १० | पावसे | प्रावृषे | १०७ | २ | युगुलं | युगलं |
| २६ | १६ | हेमन्तौ | हेमन्ततौ | ११३ | १७ | सद्रश्यते | संदृश्यते |
| २८ | २१ | वलिं | वालिं | १२५ | २२ | सृष्टुं | स्रष्टुं |
| ५७ | १७ | सृस्त | स्रस्त | १३६ | १३ | भिलाषित | भिलषित |
| ६४ | ३ | पृष्टुकामो | प्रष्टुकामो | १४८ | ९ | जय सन्नादैः | जैत्रैर्नादैः |
| ६८ | १५ | त्वामासीः | त्वमासीः | १५४ | २७ | तिक्षां | तितिक्षां |
| ७३ | ३० | जगतोऽस्य | जगतोऽसौ | १५९ | ७ | यो | यः |
| ९७ | ४ | पावसो | प्रावृषो | १५९ | ८ | विशम्भरे | विश्वम्भरे |

## काव्ये प्रस्तुतानां चित्रबन्धानामाकाराः

ॐ

卐 श्री रामो विजयतेतराम् 卐

# दूताञ्जनेयम्

## प्रथमः सर्गः

मङ्गलमोदमुदारो मङ्गलमूर्तिस्तनोतु गणनाथः ।
यस्य कृपाकर-निकरै-र्विघ्नध्वान्तं विशीर्यते सहसा ॥१॥

मंगलमूर्ति गणों के स्वामी उदार भगवान गणेश मंगल और प्रसन्नता का विस्तार करें जिनकी कृपा की किरण समूह से विघ्नों का अन्धकार सहसा लुप्त हो जाता है ॥१॥

शं कुरुतां शिवरूपः शूली रुद्रः स चाशुतोषोऽपि ।
विषं गले हृदि नागाः सौन्दर्यं यस्य टीकन्ते ॥२॥

शिव रूप भगवान शंकर कल्याण करें जो शूल धारी रुद्र होते हुए आशुतोष भी हैं। और जिनके गले में विष तथा हृदय पर विषधर नाग सौन्दर्य प्रकट करते हैं ॥२॥

मधुरसरसवरवीणाझङ्कारैः शारदे ! समृद्धं वै ।
सहृदयजनसंवेद्यैर्भावैः कुरुतां कवित्वं मे ॥३॥

हे मां सरस्वती ! अपनी मधुर सरस सुन्दर वीणा की झंकारों से मेरे कवित्व को, सहृदय जनों के हृदय को स्पर्श करने वाले भावों से समृद्ध कर दो ॥३॥

सहृदयहृदि संवेद्या सरसा सगुणाप्यलङ्कृता कविता ।
जयति चिरं विलसन्ती लोकेऽस्मिन् कस्यचित् सुकवेः ॥४॥

सहृदय जन के हृदय को स्पर्श करने वाली सरस गुण और अलंकारों से परिपूर्ण, किसी सुकवि की कविता, इस लोक में, चिरकाल तक विलास करती हुई गौरवान्वित होती है ॥४॥

**सुवर्णपदविन्यासा माधुर्यगुणशोभना ।**
**हरते न मनो कस्य कान्ताकृतिरलङ्कृता ॥५॥**

सुन्दर वर्ण और पदों के विन्यास वाली, माधुर्य गुण से शोभित अलंकारों से युक्त काव्य रचना किसका मन हरण नहीं करती है। (यहां कान्ताकृति का पदच्छेद कान्ता + आकृति करने से सुन्दर रूपवाली नारी के अर्थ के साथ उक्त सभी विशेषण तदनुसार जुड़ जाते हैं) ॥५॥

**काव्येऽस्मिन्नुभयो - र्वियोगविषमोत्कण्ठाभिसन्तप्तयोः,**
**सीताराघवयोः सरोषमनसोराक्रोश - संवेदनम् ।**
**सन्देशं कपिराहरन् दयितयोर्यद् दौत्यमार्यो व्यधात्,**
**तद् भावैर्ललितैर्यथामति कविः श्लोकैः समायोजयत् ॥६॥**

इस काव्य में वियोग की विषम उत्कण्ठा से सन्तप्त रघुवंशी राम एवं सीता के रोष से भरे हुए मन के आक्रोश और संवेदनशील भावना मय सन्देश को, दोनों प्रिय जनों तक पहुंचाने का जो हनुमान ने दूत कार्य किया है, उस प्रसंग को, कवि ने अपनी बुद्धि के अनुसार, उन भावों से सम्बद्ध ललित श्लोकों के माध्यम से, समायोजित किया है ॥६॥

**विक्षोभो हृदि धन्विनः परिभवः शौर्यस्य संवेदिनोऽ-**
**प्यन्तःस्नेहकथा व्यथा विरहजाप्यार्य-प्रतिज्ञा तथा ।**
**नारीमानधनापहर्तुरचिराद् विध्वंसनं रक्षसो,**
**दौत्यं चापि कपेः कवित्वकलितं दूताञ्जनेयं कवेः ॥७॥**

एक धनुर्धर के हृदय में विक्षोभ, संवेदनशील शौर्य का परिभव, अन्तर्मन की स्नेह कथा और वियोग से उत्पन्न व्यथा तथा आर्य श्रेष्ठ राम की प्रतिज्ञा, नारी के सम्मान रूपी धन का अपहरण करने वाले राक्षस रावण का शीघ्र विध्वंस तथा कपिराज हनुमान का दूत कार्य, इन्हीं सब प्रसंगों से परिपूर्ण कवि की यह 'दूताञ्जनेयम्' काव्य रचना है ॥७॥

नास्मिन् काव्ये प्रकृतवपुषो रोदनं विप्रयोगे,
शौर्योद्दीप्तप्रखरमहसो राघवेन्द्रप्रियायाः।
कौटिल्येन प्रसभहरणं राक्षसेन्द्रेण येना–
क्रोशो रोषः प्रणमपि हठाद् धन्विनः क्षत्रियस्य ॥८॥

इस काव्य में किसी सामान्य पुरुष का प्रिया वियोग में रोदन मात्र नहीं है। इसमें शौर्य से उद्दीप्त प्रखर तेज सम्पन्न श्री राम की पत्नी सीता का, राक्षस राज रावण के द्वारा कुटिलता के साथ बलात अपहरण हुआ है। जिसके कारण एक धनुषधारी क्षत्रिय के आक्रोश रोष और हठपूर्वक रावण वध के लिए कि हुई प्रतिज्ञा भी है। जिसकी पूर्ति हुई है ॥८॥

रामः साक्षाद् ब्रह्मरूपः शिवोऽयं,
द्वन्द्वातीतः सच्चिदानन्द - रूपः।
निर्वेद्यः सन् निर्गुणो लीलयासौ,
धत्ते रूपं विश्वमाङ्गल्यहेतोः ॥९॥

राम तो साक्षात् ब्रह्म हैं शिव हैं जो द्वन्द्व से परे और सच्चिदानन्द स्वरूप हैं। वे अवेद्य होते हुए निर्गुण होकर भी विश्व कल्याण के लिए लीला रूप धारण कर साकार हो जाते हैं ॥९॥

शश्वद् यो रमते सदा तनुभृतां प्राणेषु चान्तः श्वसन्,
सर्वं वै जडजङ्गमं जगदिदं येनावृतं वर्तते।
यत् तेजस्तरणिर्दधाति सकलश्चन्द्रोऽपि तारागणः,
सोऽयं प्राणभृतां समस्तविपदां रामो विरामो भवेत् ॥१०॥

जो निरन्तर जीव धारियों के प्राणों में अन्तः श्वास लेते हुए रमण करता है। यह समस्त चर अचर संसार निश्चय ही जिसके द्वारा आवृत है, जिसके तेज को सूर्य तथा समस्त तारागण एवं चन्द्रमा धारण करते हैं, वही यह 'राम' समस्त प्राणधारियों की विपत्तियों का विनाश करें ॥१०॥

रामो यो रमते जनेषु सततं यो रम्यते योगिभिः,
यल्लीलां भुवि सूरयः प्रतिभयागायन्त ब्रह्मर्षयः।
हर्तुं भारमवातरन्ननु भुवो भूत्वाऽप्यजो निर्गुणो,
मर्यादां स च लोकमङ्गलमयीमस्थापयद् भूतले ॥११॥

राम जो जनों के हृदयों में प्राण रूप में विद्यमान रहता है तथा जिसमें योगी लोग रमण करते हैं। महान् कवियों तथा ब्रह्मर्षियों ने अपनी प्रतिभा से इस पृथ्वी पर जिसकी लीलाओं का गायन किया है, वह अजन्मा और निर्गुण होते हुए भी पृथ्वी के भार को हरण करने के लिए अवतार ग्रहण करता है तथा पृथ्वी पर लोक मंगलमयी मर्यादा की स्थापना करता है ॥११॥

भूभाराहरणाय भक्तसुजनोद्धराय नारायणो,
दुष्टानामवशं वधाय सततं लोकद्विषां रक्षसाम्।
प्रत्यक्षं भुवि लोकमङ्गलविधिं संस्थापयन् शाश्वतम्,
विश्वानुग्रहकाँक्षया प्रभवति प्रायः स्वयंभूः स्वयम् ॥१२॥

पृथ्वी के भार को हरने के लिए, सुजनों के उद्धार हेतु, दुष्टों तथा निरन्तर लोक विनाशक राक्षसों के वध के लिए विश्व पर अपनी कृपा करने की इच्छा से पृथ्वी पर शाश्वत लोक मङ्गल के विधान की स्थापना करते हुए स्वयं भगवान नारायण प्रत्यक्ष रूप में स्वयं अवतीर्ण हो जाते हैं। ॥१२॥

यत्राकारणमेव बाल - वनिता - वृद्धान् निरीहानपि,
क्रूरा निर्दयमाततायिमनुजा निघ्नन्ति दीनानहो।
अत्याचार - हिरण्यकश्यपुकरात् प्रह्लादबालाँश्च कः,
उद्धर्तुं प्रभवेन्न चेदवतरेत् स्तम्भान्नृसिंहः स्वयम् ॥१३॥

अरे जहां अकारण ही बालक नारी वृद्ध निरीह दीन जनों को क्रूर, आततायी मनुष्य निर्दयता पूर्वक मार रहे हों, तो अत्याचार रूपी हिरण्यकश्यपु के हाथ से प्रह्लाद जैसे बालकों को कौन बचा पाएगा यदि स्तम्भ से ही भगवान स्वयं नरसिंह रूप में नहीं उत्पन्न होंगे ॥१३॥

रङ्गे पात्रविशेषतामभिनयन् यद्वन्नटो नर्तको,
लीलां हर्षविषादविस्मयकरीं सन्मानसाह्लादिनीम्।
निर्लिप्तः कुरुते धरामवतरन् लीलावतारः प्रभुः,
तद्वल्लोकहितेऽभिनीय चरितं निर्याति मञ्चादसौ ॥१४॥

जिस प्रकार नर्तक नट रङ्गशाला के मञ्च पर किसी पात्र की विशेषताओं का अभिनय करता हुआ, उससे निर्लिप्त होकर, सत्पुरुषों के मानस को आनन्द देने वाली हर्ष, विषाद, विस्मय उत्पन्न करने वाली लीला करता है, उसी प्रकार सर्वशक्तिमान लीलावतार भगवान पृथ्वी पर अवतार लेकर, जनहित में किसी चरित्र का अभिनय कर नट की भांति, मञ्च से चले जाते हैं ॥१४॥

विश्वातीतगुणो धरामवतरन् रामो महानीश्वरः,
सम्यक् संदधती चराचरजगद् माया प्रिया जानकी।
लोके यच्च यथानुभूय सकलं योगं वियोगव्यथाम्,
निर्लिप्तावभिनिन्यतुस्तदखिलं लोक प्रसादाय तौ ॥१५॥

विश्व से परे गुणों वाले, इस पृथ्वी पर अवतार लेने वाले श्री राम महान ईश्वर हैं, तथा उनकी प्रिया जानकी सीता, भली प्रकार इस चर अचर संसार का सन्धान करने वाली, साक्षात्, माया है। इस लोक में जो जैसा संयोग अथवा वियोग व्यथा का अनुभव करके उन्होंने निर्लिप्त भाव से जो अभिनय किया है, निश्चय ही, वह समस्त, लोक कल्याण के लिए है ॥१५॥

लोकत्राण - परायणः परिहरन् स्वर्गोपमं वैभवम्,
वैदेह्या प्रियभार्यया सह वसन् यो दण्डके कानने।
दुर्धर्षं भुवनत्रये रणमुखे यश्चावधीद् रावणम्,
कल्याणं कुरुतादनन्तकृपयाऽसौ कोशलेन्द्रो भुवः ॥१६॥

लोक रक्षा में परायण स्वर्ग के सदृश अयोध्या का ऐश्वर्य त्याग कर, प्रिय भार्या सीता जी के साथ दण्डक वन में निवास करते हुए जिन्होंने तीनों लोकों में अपराजेय रावण का युद्ध में वध कर दिया, वे कौशलेन्द्र राम अपनी अनन्त कृपा से पृथ्वी का कल्याण करें ॥१६॥

पादाति - र्भुवि पर्यटन्नपि गृहान्निर्वासितस्तापसः,
साहाय्यैः समुपेत्य सिन्धुमपि योऽबध्नात् कपीनां बलैः।
लोकत्रासमुद्धतं दशमुखं यश्चावधीत् सान्वयं
रामो मङ्गलमावहेत् तनुभृतामुन्मूलयन्नापदाम् ॥१७॥

गृह से निर्वासित, तपस्वीरूप, पदाति पृथ्वी पर भ्रमण करते हुए जिन्होंने वानर सैन्य सहायता से वहां पहुंच कर समुद्र को भी बांध लिया और जिन्होंने संसार को कष्ट देने वाले उदण्ड राक्षस रावण का कुल सहित विनाश कर दिया वे श्री राम समस्त आपदाओं का विनाश करते हुए देहधारियों का मंगल करें ॥१७॥

शक्त्या सन्तरणं विपज्जलनिधे - रुन्मूलनं विद्विषां,
दीनानां परिपालनं च सुहृदां संरक्षणं सर्वथा।
दुःखं वा सुखभोगयोगविरहावर्तव्यथा - वर्तनं,
वन्द्यं सच्चरितं प्रभोः परिचितं सन्मानवीयैर्गुणैः ॥१८॥

अपनी शक्ति से आपदाओं के समुद्र को पार कर जाना, शत्रुओं का उन्मूलन, दीनों का पालन, मित्रों का भली भांति संरक्षण अथवा दुःख सुख का भोग, संयोग तथा वियोग की व्यथा का भुगतना यह सब प्रभु श्री राम के सन्मानवीय गुणों से परिपूर्ण सच्चरित्र ही हैं, जो सर्वथा वन्दनीय हैं ॥१८॥

मर्यादापुरुषोत्तमस्य सकलं विश्वाभिवन्द्यं महद्,
यद्यप्यार्यगुणै-र्विभूषितमभूद् भव्यं चरित्रं प्रभोः।
संवेद्यं जगतश्च मानवमनःसंवेदनास्पर्शि यज्,
जानक्या विरहानुभूतिचरितं लोकोत्तरं वन्द्यते ॥१९॥

मर्यादा पुरुषोत्तम प्रभु श्री राम के समस्त विश्व में वन्दनीय महान चरित्र यद्यपि आर्य गुणों से विभूषित और भव्य हैं तथापि समस्त जगत के लिए संवेदनशील मानव मन की संवेदना का स्पर्श करने वाला, प्रभु का जो जानकी के विरह अनुभूति का चरित्र है, वह लोकोत्तर है तथा वन्दनीय है ॥१९॥

भ्राम्यन् भूमितले पदातिरवशं विष्वग् वने सानुजः,
पृच्छन् साश्रुमुखो लतातरुमृगान् प्राणप्रियां जानकीम्।
आक्रोशन् निजपौरुषं क्षणमसौ दुर्दैवमेव ब्रुवन्,
विक्षिप्तो विरहव्यथाकुलमना लीलानरः पातु माम् ॥२०॥

विवश पैदल वन में भूमि पर भाई के साथ विवश इधर-उधर भटकते हुए, आँसुओं से भीगा मुख लिए लता वृक्ष तथा पशुओं से अपनी प्राण प्रिया जनक पुत्री सीता को पूछते, कभी अपने पौरुष को कोसते, तो क्षणभर में दुर्दैव की बात करते हुए, विक्षिप्त विरह व्यथा कुल मन वाले, लीला धारी पुरुष भगवान राम मेरी रक्षा करें ॥२०॥

वैदेहीविरहव्यथाकुलमनोभावं स्वभावोचितं,
विक्षुब्धं क्वचिदार्यशौर्यनिहितं विश्वासधैर्यप्रदम्।
सम्यग् मानवभावनापरिचितं संवेदनासिञ्चितं,
स्नेहार्द्रं प्रियराघवेन्द्रहृदयं स्वान्तःशिवायास्तु मे ॥२१॥

वैदेही की विरह व्यथा में व्याकुल स्वाभाविक मनोभावों से युक्त विक्षप्त होते हुये भी कहीं पर आर्य शौर्य में निहित विश्वास और धैर्य प्रदान करने वाला, भली प्रकार मानव भावना से परिचित एवं संवेदना से सिञ्चित, स्नेह से आर्द्र राघवेन्द्र श्री राम का प्रिय हृदय, मेरे मन को कल्याण करने वाला होवे ॥२१॥

पत्युः स्नेहवशाद् वनेऽपि न जहौ छायेव या स्वामिनं,
साकेतं प्रविहाय या च विजनेऽवात्सीद् घने कानने।
दुर्दैवादवशं हृता प्रियतमाद् दूरं गतैकाकिनी,
सा लोकोत्तरवन्दनीयचरिता पायाज्जनान् जानकी ॥२२॥

पति के स्नेह के कारण जिन्होंने छाया की भांति वन में भी स्वामी का साथ नहीं छोड़ा। जिन्होंने अयोध्या का परित्याग कर निर्जन सघन वन में निवास किया। दुर्भाग्य वश, विवश अपहरण होने पर प्रियतम से दूर जाकर जिन्हें एकाकी रहना पड़ा। वह अलौकिक वन्दनीय चरित्र वाली जानकी सीता जी जनजीवन की रक्षा करें ॥२२॥

**धन्या धैर्यधना प्रियाद् विरहिता या राक्षसीभिर्वृता ,**
**पत्युः स्नेहपरायणा तरुतले भूमौ शयानाऽपि या ।**
**धिक्कृत्योग्रवचांसि निश्चरपतेः सद्यस्तिरस्कुर्वती ,**
**पायाद् मामिह मानवीयकरुणामूर्तिः सदा जानकी ।।२३।।**

वे धन्य हैं उनका धैर्य ही धन है, ऐसी जो अपने प्रिय से अलग होकर राक्षसियों से घिरी हुई अपने पति श्री राम के स्नेह में डूबी हुई अशोक वृक्ष के नीचे पृथ्वी पर शयन करते हुए भी, राक्षस राज रावण के उग्र वचनों को तत्काल धिक्कार के साथ तिरस्कृत करती हुई, मानवीय करुणा की मूर्ति मां जानकी सीताजी, इस संसार में मेरी सदा रक्षा करें । ।।२३।।

**रक्षोभूमिगता न किञ्चिदभजद् भीतिं विपन्नापि या ,**
**संघर्षेष्वपि दुर्दिनेषु, विपदां या नात्यजत् साहसम् ।**
**नारीणां धुरि कीर्तिता सुयशसा विश्वम्भरा मानवी ,**
**मान्या मङ्गलमावहेदनुपदं सा राघवेन्द्रप्रिया ।।२४।।**

राक्षसों की भूमि लंका में विपत्ति की दशा में भी जो किञ्चिद् भयभीत नहीं हुई, विपत्ति के दिनों में संघर्षों में भी जिसने साहस का त्याग नहीं किया, अपने महान उच्च यश से जो नारियों में अग्रगण्य कही जाती हैं, ऐसी विश्व को पालन करने वाली, मानवरूप में अवतीर्ण वह मान्य राघवेन्द्र श्रीराम की प्रिया, श्री सीता जी पदपद पर मंगल प्रदान करें । ।।२४।।

**बाल्यात् स्नेहवशाद् गृहेऽप्यनुसरन् सुश्रूषया भ्रातरं ,**
**योऽवात्सीद् विपिने चतुर्दशसमाः श्रीरामसेवाव्रती ।**
**सीताया विरहे प्रभुं प्रतिपदं धैर्यं समासादयन् ,**
**शत्रून्मूलनशौर्यमूर्तिरवताद् रामानुजो लक्ष्मणः ।।२५।।**

स्नेह के कारण सेवा की भावना से जो गृह में भी अपने भाई का अनुसरण करते हुए, वन में भी, चौदह वर्षों तक श्री राम की सेवा का व्रत लेकर निवास करते रहे, जो सीता के वियोग में बड़े भाई श्री राम को पद-पद पर धैर्य प्रदान करते रहे, शत्रुओं को उखाड़ फेंकने में शौर्य की मूर्ति वे रामानुज लक्ष्मण विश्व की रक्षा करें ।।२५।।

**बाल्ये बिम्बाफलाभं कपिचपलदृशालोक्य प्राच्यामुदीत-**
**मुल्लङ्घ्याकाशमुच्चैरकृत दिनकरं भास्करं प्रातराशम् ।**
**विश्वं पश्चाद् विपन्नं तमसि तनुभृतां जीवनं वीक्ष्य दीनं ,**
**ग्रस्तं सद्यो विमुञ्चञ्जयति जगदिदं जीवयन्नाञ्जनेयः ॥२६॥**

जिन्होंने बाल्यकाल में कपि-चञ्चल दृष्टि से एक बार पूर्व में उदित होते हुए बिम्ब फल के समान लाल वर्ण के दिनकर सूर्य को ऊपर आकाश में उछल कर प्रातः काल का भोजन बना लिया। बाद में समस्त विश्व को, अंधकार में विपत्ति ग्रस्त एवं देहधारियों के जीवन की दीन दशा देखकर, ग्रस्त सूर्य को तत्काल मुक्त करते तथा इस संसार को जीवन प्रदान करते हुए अञ्जनी पुत्र हनुमान की जय होवे ॥२६॥

**गम्भीरं शतयोजनं जलनिधिं तर्तुं यदैवाक्षमाः ,**
**सीतान्वेषणतत्परा हरिवरा यावन्भवन्त्वाकुलाः ।**
**तावच्छौर्यसमेधमानमतुलं हेमाद्रि - शृङ्गोपमं ,**
**लीलोल्लङ्घनविक्रमोद्यतपदं वन्दे कपीन्द्रं सदा ॥२७॥**

गम्भीर और सौ योजन तक विस्तीर्ण इस समुद्र को पार करने में असमर्थ वे सीता की खोज में लगे हुए श्रेष्ठ वानर, जब तक चिंता में व्याकुल हो, तब तक अतुल शौर्य से वृद्धि को प्राप्त हुए, स्वर्ण पर्वत शिखर के समान, लीला से ही समुद्र को पार करने के लिये, विक्रम के साथ चरण को उठाए हुए, कपीन्द्र श्री हनुमान की मैं सदा वन्दना करता हूं ॥२७॥

**संरुद्धां सघनापदां परिसरे लङ्कापुरे जानकीं ,**
**सन्देशं घनवर्षहर्षनिभृतं सञ्जीवनं श्रावयन् ।**
**दग्धायाः प्रियविप्रयोगदहने प्राणप्रियायाः कथां ,**
**श्रीरामाय निवेदयन् रघुपतेर्दूतोऽञ्जनेयो जयेत् ॥२८॥**

सघन आपदाओं के परिसर जैसे लङ्का नगर में घिरी हुई जानकी को, सघन वर्षा जैसे हर्ष से परिपूर्ण सञ्जीवन सन्देश को श्रवण कराते हुए तथा प्रिय वियोग की अग्नि में दग्ध प्राणप्रिया सीता की व्यथा कथा को श्री राम के लिए निवेदन करते हुए, रघुनाथ जी के दूत अञ्जनी नन्दन श्री हनुमान की जय हो ॥२८॥

सुग्रीवस्य विभीषणस्य विपदां ध्वंसे च राज्यागमे,
संप्राप्यार्यवधूमथाक्षहनने लङ्कापुरीदाहने ।
सौमित्रप्रतिरक्षणे च निधने लोकद्विषां रक्षसां,
पौलस्त्यस्य वधेऽग्रणी कपिवरो वीराञ्जनेयो जयेत् ॥२६॥

सुग्रीव और विभीषण की विपत्तियों के विनाश और राज्य प्राप्ति में, आर्य वधू श्री जानकी की खोज कर अक्षकुमार के मारने और लङ्कापुरी के दहन में, लक्ष्मण की रक्षा में, तथा लोक शत्रु राक्षसों के विनाश में, पौलस्त्य रावण के वध में अग्रणी रहने वाले वानर श्रेष्ठ वीर अञ्जनी पुत्र श्री हनुमान की जय हो ॥२९॥

जनहिते निजजीवन - मर्पयन्,
परविपत्तिमवेक्ष्य निजामिव ।
प्रतिकरोति विवेक - बलेन यो,
नरममुं दयते हनुमान् सदा ॥३०॥

मनुष्यों के हित में अपना जीवन अर्पण करने वाला, दूसरों की विपत्ति को अपनी विपत्ति जैसी देखकर जो अपने विवेक बल से उसका प्रतिकार करता है, श्री हनुमान उस पर सदा अपनी कृपा करते हैं ॥३०॥

इति दूताञ्जनेये महाकाव्ये
मङ्गलाचरणं नाम
प्रथमः सर्गः

# अथ दूताञ्जनेयम्

## द्वितीयः सर्गः

**सद्धर्माणामुदधिरपराखण्डलः कोशलानां,**
**भूपालोऽभूद् दशरथ इति ख्यातनामा यशस्वी।**
**चत्वारोऽस्य प्रकृतिमधुरा ईश्वरांशावतीर्णाः,**
**पुत्रा आसन् भुवनविदिताः सूर्यवंशप्रदीपाः ॥ १ ॥**

सत्य धर्म के सागर द्वितीय इन्द्र के समान यशस्वी दशरथ नाम से विख्यात कौशल देश के राजा हुए। इनके प्रकृति से मधुर ईश्वर के अंश से अवतीर्ण, सूर्य वंश के दीपक, भुवन विख्यात चार पुत्र हुए ॥१॥

**वाग्बद्धं तं प्रथित यशसं मध्यमा तस्य भार्या,**
**पूर्वं दत्तं वचनमुररीकर्तुमार्यं ययाचे।**
**वीक्ष्य ज्यायान् विवशपितरं सत्यसन्धं मनस्वी,**
**पुत्रो रामः स्वयमनुसरँस्तद्वचोऽगादरण्यम् ॥ २ ॥**

वचनवद्ध उस प्रख्यात यश वाले महान् राजा से उनकी मध्यमा महारानी ने, उसे पूर्व में दिए गए वचन को स्वीकार करने के लिए, प्रार्थना की। सत्य वचन पर अडिग रहने वाले अपने विवश पिता को देखकर उनके ज्येष्ठ पुत्र मनस्वी राम उनके वचनों का पालन करते हुए स्वयं वन को चले गए ॥२॥

**तं गच्छन्तं वनपरिसरं सत्यसंरक्षणाय,**
**भार्या सीता पतिमनुगतोपक्ष्य वन्योपतापम्।**
**त्यक्त्वा पौरानपि परिजनान् शोकसिन्धौ विलीनान्,**
**सौमित्रेण द्रुतमनुसृतं बन्धुना लक्ष्मणेन ॥ ३ ॥**

सत्य की रक्षा के लिए उनको वन जाते हुए देखकर उनकी पत्नी सीता वन के कष्टों की उपेक्षा करके उनके पीछे चल दी। तथा उनके अनुज सुमित्रा नन्दन लक्ष्मण ने पुरवासी और परिजनों को शोक सिन्धु में डूबा हुआ छोडकर तत्काल उनका अनुसरण किया ॥३॥

कालं दीर्घावधिमपनयन् चित्रकूटे मनस्वी,
भूयोऽगच्छत् प्रियसहचरै - र्दण्डकारण्यमार्यः ।
गोदावर्याः सलिलशिशिरैः पावने तत्र वातै-
र्वासं चक्रे मुनिपरिगतः पञ्चवट्याश्रमेऽसौ ॥ ४ ॥

लम्बी अवधि तक चित्रकूट में, समय व्यतीत कर, तत्पश्चात् आर्य, मनस्वी, श्री राम अपने प्रिय जन, पत्नी और भ्राता के साथ दण्डकारण्य की ओर चले गये । वहाँ पहुंचकर वे गोदावरी के जल से शीतल, वायु से पवित्र, पंचवटी आश्रम में, मुनिजनों के बीच निवास करने लगे ॥४॥

तत्राकस्मान्निशिचरपते - र्निर्जरारेर्भगिन्याः,
दुष्कृत्येनाश्रमपरिसरे शान्तिरुद्वेल्लिताभूत् ।
येनैकाकी रघुकुलमणि - र्युध्यमानान् खरादीन्,
उद्यन् भास्वाँस्तिमिरमिव तान् राक्षसान् ध्वंसते स्म ॥ ५ ॥

वहाँ अक्समात् राक्षसराज देव रिपु रावण की बहन सूर्पणखा के दुष्कृत्य से, आश्रम परिसर की शान्ति भंग हो गयी । फलस्वरुप रघुकुलमणि श्री राम ने युद्ध करने वाले खर आदि राक्षसों को अकेले ही, इस प्रकार नष्ट कर दिया जैसे उदय होता हुआ सूर्य अन्धकार को नष्ट कर देता है ॥५॥

शून्यात् तत्राश्रमपरिसरात् तेन मायाविनास्य,
भार्या सीता दनुजपतिना रावणेनापनीता ।
रामोऽन्विष्यन् विरहविधुरस्तामगाद् ऋष्यमूकं,
बालित्रासान्निवसति कपिर्यत्र सुग्रीवनामा ॥ ६ ॥

उस मायावी दनुजपति रावण ने, वहाँ शून्य आश्रम परिसर से उनकी प्रिय पत्नी सीता का हरण कर लिया । उनकी खोज करते हुए, विरह से व्यथित राम, ऋष्यमूक पर्वत पर पहुंचे, जहाँ बालि के भय से सुग्रीव नामक कपिराज निवास करते थे ॥६॥

**सख्यं तेन द्रवितमनसा सोऽग्निसाक्ष्यं विधाय,**
**बालिं सख्युर्विभववनिताहारिणं संजहार ।**
**राज्यं दत्त्वा सह परिजनै - र्वानरेन्द्राय तस्मै,**
**वर्षाकाले गिरिमुपगतो वर्षणाख्यं प्रपूर्वम् ॥ ७ ॥**

राम ने दयालु हृदय से अग्नि को साक्ष्य कर सुग्रीव से मित्रता करके, मित्र के विभव और पत्नी का अपहरण करने वाले बालि का वध कर दिया तथा परिजनों के साथ उन वानरेन्द्र सुग्रीव को राज्य देकर, वर्षाकाल प्रारम्भ होने पर, स्वयं प्रवर्षण नामक पर्वत पर प्रवास के लिए चले गए ॥७॥

**रामो जातो नवजलधरश्यामलं प्रावृषेण्यं,**
**कालं नेतुं नियतिविवशः कन्दरे पर्वतानाम् ।**
**भार्या सीता प्रियतमसखी यस्य कान्ता मनोज्ञा,**
**दूरं नीता क्वचिदपहृता दानवेनासहाया ॥ ८ ॥**

घनघोर, काले-काले नवीन बादलों से भरी हुई उस वर्षा ऋतु में, भाग्यवश श्री राम पर्वत की गुफा में समय व्यतीत करने के लिए विवश हो गये, जिनकी प्रिय सखी मनोज्ञ पत्नी असहाय सीता को रावण अपहरण करके कहीं दूर ले गया था ॥८॥

**त्यक्त्वैश्वर्यं सकलमचिराद् वैभवं कोशलानां,**
**गच्छन् दूरं मनसि विपिनं खिन्नतां यो न भेजे ।**
**सोऽस्मिन् रामः सहृदयसखीविप्रयोगे विषीदन्,**
**पश्यन् श्यामान् नभसि जलदान् साश्रुनेत्रो बभूव ॥ ९ ॥**

कोशलराज्य का समस्त ऐश्वर्य और वैभव क्षण भर में त्याग कर वन जाते हुए भी जो कभी खिन्न नहीं हुए थे, वही राम आज अपनी प्रिय सखी सीता के इस वियोग में खिन्न मन से आकाश में श्यामघनों को देखते हुये आँखों में आंसू भर लाये ॥९॥

धूम्रश्यामान् कनकलतयालिङ्गनाबद्धगात्रान् ,
पश्यन् मेघान् सह दयितया स्वागतं व्याहरद् यः ।
तानेवासौ विरहविधुरो वारिदान् पावसेऽस्मिन् ,
दर्शं दर्शं सजलनयनो धैर्यबन्धं मुमोच ॥ १० ॥

जो राम अपनी प्रिया सीता के साथ, धूम और श्याम वर्ण के बादलों को, कनकलता बिजली से आलिङ्गनबद्ध देखते हुए, उनका सहर्ष स्वागत किया करते थे, विरह से व्याकुल उन्हीं ने, इस पावस ऋतु में, उन बादलों को अश्रुपूर्ण नयनों से बार-बार देखकर अपने धैर्य का बाँध तोड़ दिया ॥१०॥

तानारूढान् सुरपति - दिशाकाशमुद्दामघोषान् ,
सौदामिन्या रचितचपलस्निग्धलीलाविलासान् ।
रामो वर्षाजलदनिवहानीक्षमाणोऽविरामं ,
भार्याभीरुर्विकलमभवद् दुर्दिने प्रावृषेण्ये ॥ ११ ॥

पूर्व दिशा की ओर से आकाश की ओर उठते हुए, घनघोर गरजते हुए तथा चमकती हुई चञ्चल बिजली के साथ मानों सरस लीला विलास करते हुए, वर्षा के मेघ समूह को लगातार देखते हुए श्री राम इस वर्षा कालीन दुर्दिन में अपनी अपहृत पत्नी सीता की स्मृति से भयभीत होते हुए व्याकुल हो गये ॥११॥

संयम्यासौ कथमपि मनो वारयन्नश्रुवेगं ,
दीर्घश्वासै - र्विगलितपदै - र्व्याप्तकण्ठावरोधः ।
अन्तर्व्याप्ते तमसि बहुशो मार्गयन् मार्गरेखा-
मूचे रामः शिथिलकरणैर्लक्ष्मणं वक्ष्यमाणम् ॥ १२ ॥

किसी प्रकार मन को संयमित करके, अश्रुवेग को रोकते हुए, हृदय में व्याप्त अन्धकार में अनेक प्रकार से मार्ग रेखा की खोज करते हुए, अवरुद्ध कण्ठ, शिथिल इन्द्रिय राम, लम्बी सांस भरकर लड़खड़ाते शब्दों के द्वारा लक्ष्मण से इस प्रकार बोले ॥१२॥

**भ्रातर्जाता नियतिरधुना कीदृशी राघवाणां,**
**शेते भूमौ भ्रमति विपिने वर्तयन्नेष वन्यैः।**
**रामो यासीत् प्रियसहचरी सा हृता राक्षसेन,**
**जाने नापि क्व नु खलु भवेज्जानकी दुर्दिनेऽस्मिन् ॥ १३ ॥**

हे भ्राता ! इस समय रघुवंशियों का भाग्य कैसा हो गया है ? यह राम वनवासियों के साथ वन में घूम रहा है। भूमि पर शयन करता है। वन में साथ देने वाली जो पत्नी थी, उसे राक्षस ने हरण कर लिया। मुझे मालूम भी नहीं कि इस दुर्दिन में प्रिय जानकी कहाँ होगी ॥१३॥

**विद्युद्दीपैः सह घनरवैः कौतुकं दर्शयन्ती,**
**शीतस्पर्शैः सरससजलैर्वायुभिः संस्पृशन्ती।**
**एषा भ्रातर्विरहदहने तप्यमानं प्रियाया,**
**भूयोऽप्यन्तर्दहति गगने मेघमाला चरन्ती ॥ १४ ॥**

हे भ्राता ! विद्युद् दीपों की चमक के साथ, कौतुक प्रकट करती हुई एवं शीतल, सरस, मन्द पवन से मुझे स्पर्श करती, आकाश में विचरण करती यह मेघमाला, प्रिया की विरह अग्नि में तप रहे मुझ राम को अन्दर से और अधिक जला रही है ॥१४॥

**भृङ्गारीयं श्रवणपुटयोः पीडयन्ती पटान्तं,**
**शब्दायन्ते प्रतिदिशमहो दर्दुराणां समूहाः।**
**झञ्झावातैः प्रचुरतिमिरं व्यञ्जयन्ती समन्ता-**
**देषा घोरामतनुत निशां प्रावृषेण्या घनाली ॥ १५ ॥**

झिल्ली (झींगुर) श्रवणपुटों को पीट रही है। चारों ओर मेढकों के समूह शब्द कर रहे हैं। झंझावात से चारों ओर अन्धकार की अधिकता को व्यञ्जित करती हुई इस पावसी मेघमाला ने रात्रि को और अधिक भयंकर बना दिया है ॥१५॥

**श्यामा रात्रिर्विचरति घनैः केशजालैं - रुदन्ती,**
**शून्येऽरण्ये सजलनयना चातकार्तस्वरेण ।**
**यस्याः प्रेयान् क्वचन दिवसः सन्ध्यया सानुरागः,**
**शोकोद्विग्ना विवशविकला किं नु कुर्यादधीरा ।। १६ ।।**

यह श्यामा रात्रि, घने केशजाल बिखेरे, शून्य आकाश में सजल नयन चातक के आर्त्त स्वर में रोती हुई, विचर रही है। जिसका प्रियतम दिवस सन्ध्या के साथ अनुरागी हो जाये तो वह अधीर होकर शोक से व्याकुल विवश और विकल, भला, क्या न कर, कहाँ-कहाँ न भटके ।।१६।।

**शून्येऽरण्ये तमसि बहुशः क्वापि झञ्झाप्रवातैः,**
**मर्माघातैरपि जलमुचां दूयमानो वराकः ।**
**प्रेयांसं सस्वरमुनुसरन्नाह्वयँश्चातकोऽसौ,**
**रामस्यापि व्यथितमनसो वेदनामातनोति ।। १७ ।।**

(देखो लक्ष्मण) शून्य वन में अन्धकार में कहीं बादलों की वर्षा के तीव्र आघातों के साथ बरसाती तेज हवाओं से पीड़ित, यह बेचारा पपीहा, मानों, अपने प्रिय को पुकारता और स्वर का पीछा करता हुआ, राम के भी व्यथित मन की वेदना को और बड़ा रहा है ।।१७।।

**पश्य भ्रातर्गगन कुहरे क्रन्दन चञ्चलाया,**
**मेघस्याङ्के विवशविकला दूयते प्रस्फुरन्ती ।**
**काचिद् दैवादिव कुलवधू दुर्जनेन प्रसह्य,**
**बद्धा दोर्भ्यां विलपति मुहुर्मुक्तयेऽश्रुप्रवाहैः ।। १८ ।।**

हे भ्राता लक्ष्मण, आकाश की इस गहराई में इस चञ्चल बिजली की चीख देखो मानों यह मेघ की गोद में फंसी हुई विवश और विकल फड़फड़ाती हुई व्याकुल हो रही है । जैसे दुर्भाग्यवश कोई कुलवधू कभी दुर्जन के द्वारा बाहुओं में बाँध लने के कारण मुक्ति के लिए अश्रु प्रवाह के साथ विलाप कर रही हो ।।१८।।

**सूचीभेद्ये तमसि सघने मेघजाले निशायां,**
**क्वासि प्रीते ! गहनविपदि क्वासि सीते ! प्रिये ! मे।**
**वर्षत्यस्मिन् जलदसमये वर्षती चक्षुषी मे**
**नान्तस्तापं शमयितुमलं त्वद्वियोगानलोत्थम् ।। १९ ।।**

घने मेघों से भरे हुए इस सूची भेद्य अन्धकार में, हे मेरी प्रीते हे प्रिये ! हे सीते ! तुम इस गहन विपत्ति में कहाँ हो ? इस वर्षा ऋतु की निरन्तर वर्षा में, मेरी यह बरसती हुई आँखें, तुम्हारे वियोग से उठे आन्तरिक ताप को शान्त करने में समर्थ नहीं हो पा रही हैं ।।१९।।

**विद्युल्लेखा रचयितुमसौ कान्तचित्रं त्वदीयं,**
**कर्षत्येषा गगनपटले स्वर्णरेखां यदैव ।**
**सद्यो लिम्पत्यसितहृदया राक्षसीयं घनाली,**
**नैकोपायैः प्रभवति जनो द्रष्टुमेष प्रिये ! त्वाम् ।। २० ।।**

आकाश में तुम्हारा सुन्दर चित्र बनाने के लिए यह विद्युत जैसे ही स्वर्ण रेखा खीचती है, वैसे ही तत्काल यह काले हृदय वाली राक्षसी, मेघमाला उसे लीप देती है। हे प्रिये ! किसी भी उपाय से यह जन तुम्हें नहीं देख पा रहा है ।।२०।।

**मेघाक्रान्तो दिनमणिरभूद् वासरः क्षीणतापो,**
**रात्रौ चन्द्रः क्वचिदपसरँल्लीयते तारकाभिः ।**
**दूरं यावत् क्षितिजपरिखां दृष्टिराचुम्बतीयं,**
**धारासारैः पतति सलिलं तावदुद्भ्रान्तलोकम् ।। २१ ।।**

सूर्य मेघों से ढका रहता है, दिन का ताप ठंडा हो गया है। रात में चन्द्रमा, ताराओं के साथ कहीं भागकर जैसे छिप जाता है। वर्षा का यह हाल है कि, जहाँ तक यह दृष्टि दूर क्षितिज को छू रही है, वहाँ तक लोगों को व्याकुल करता हुआ धारा प्रवाह जल ही जल बरस रहा है ।।२१।।

**घोरे वर्षत्यविरलघने झर्झरी - निर्झरेऽस्मिन् ,**
**शाखासीनस्तरुषु विपिने स्वप्रियाभिः प्रसन्नः ।**
**उद्यज्जानुस्थिरनतशिरा दृश्यते फुल्लकेशो ,**
**ध्यानावस्थो मुनिजन इवासौ कपीनां समूहः ।। २२ ।।**

झर्झर करते हुए झरने के समान निरन्तर घोर घनी इस वर्षा में वन के अन्दर, वृक्षों पर अपनी प्रियाओं के साथ शाखाओं पर बैठा हुआ घुटनों को उठाए और उनपर झुके सिर को स्थिर किए हुए, बालों को फुलाए यह वानरों का समूह ध्यान में स्थित मुनियों की भाँति दिखाई दे रहा है ।।२२।।

**केकारावैः सह जलमुचां स्वागतं व्याहरन्तः ,**
**उद्यद्ग्रीवा वनतरुतलोत्क्षिप्तवर्हाः प्रसन्नाः ।**
**सान्द्रानन्द - ध्वनिपरिवृत्ता वै मयूरी - व्रजानां ,**
**कामोन्मादोल्लसितचरणा वर्हिणो नृत्यमग्नाः ।। २३ ।।**

यह मयूर अपनी केका ध्वनि के साथ बादलों का स्वागत करते हुये, अपनी गर्दन को ऊँचा उठाए, वन में वृक्ष के नीचे अपने पंखों को छितराए हुए, अपनी प्रिय मयूरियों के समूह की गम्भीर आनन्द भरी ध्वनि से घिरे हुए, तथा कामोन्माद के कारण उल्लास भरे पैरों से प्रसन्न होते हुए नृत्य में मग्न हो रहे हैं ।।२३।।

**तीव्राघातै - र्जलदपटलप्रान्तवर्षा - जलानां ,**
**झञ्झावातैः प्रबलगतिभिः शाखिनश्चोर्ध्ववृद्धान् ।**
**उद्दण्डान् वै गगनमनिशं स्पृष्टुकामान् शिरोभिः ,**
**कण्ठग्राहं नमयति बलात् प्रावृडेषोत्पथस्थान् ।। २४ ।।**

और इधर, यह वर्षा ऋतु, ऊपर को बढने बाले, सीधे अकड़े और निरन्तर आकाश को अपने शिरों से स्पर्श करने की इच्छा वाले, ऊंचे स्थानों पर खड़े वृक्षों को, बादलों से बरसते हुये जलसमूह के तीव्र आघात एवं प्रबलगति से चलने वाली झंझा हवाओं के द्वारा मानो गला पकड़ कर बलपूर्वक झुका रही है । (इसी प्रकार कोई शक्तिशाली व्यक्ति उद्दण्ड पुरुष को बलपूर्वक झुकना सिखाता है) ।।२४।।

**मेघोद्घोषैः सजलसरितां निर्झराणां निनादैः,**
**केकारावै - र्विपिनकुहरे सारसानां विरावैः।**
**पङ्क्तिं बद्ध्वा जलदपटलीमाक्रमद्भिर्जलौघै-**
**राक्रान्तं मे विकलहृदयं दुर्दिनेऽस्मिन् प्रकामम् ॥ २५ ॥**

मेघों के गर्जन, सजल सरिताओं और निर्झरों के निनाद वन के मध्य मयूरों के केका स्वर सारसों की बोली और पंक्ति बांधकर बादलों के पटलों को पार करती हुई, बक पक्तियों ने, इस दुर्दिन में, मेरे विकल मन को अत्यधिक व्याकुल कर दिया है ॥२५॥

**धारासारै - र्भुवनमखिलं तर्पयन्ती जलौघै-**
**र्वर्षाकाले सह चपलया मेघमाला विरेजे।**
**भूमि - र्जाता हरितवसना क्षुद्रनद्योऽप्यगाधा,**
**वर्त्मान्यासन् विरहिनयनानीव दुर्दर्शनानि ॥ २६ ॥**

वर्षाकाल में धारा प्रवाह जल समूह से समस्त भुवन को तृप्त करती हुई मेघमाला चपला (बिजली) के साथ शोभित हो रही है। भूमि ने हरित परिधान धारण कर लिया है। क्षुद्र नदियां भी अगाध हो गयी हैं और मार्ग विरही नेत्रों के समान दुर्दर्शनीय हो गए हैं अर्थात् दिखाई नहीं देते हैं ॥२६॥

**धान्यक्षेत्राण्यपि च पुलिनान्युन्मदानां नदीना-**
**माप्लाव्यै तज्जलदनिवहस्तापशान्तिं वितेने।**
**अन्तर्वह्नि शमयितुमहो जानकीदुःख - दीप्त-**
**मद्याप्येते घनजलधरे वर्षतश्चक्षुषी मे ॥ २७ ॥**

धान के खेत और उन्माद भरी नदियों के पुलिनों को तृप्त कर मेघ समूह ने उनके ताप को शान्त कर दिया है। परन्तु प्रिया जानकी के दुःख से जल रही हृदय की अग्नि को शान्त करने के लिये घन जल-धर यह मेरे दोनों नेत्र आज भी बरस रहे हैं अर्थात् निरन्तर अश्रु बहाने पर भी हृदय की आग शान्त नहीं हो रही है ॥२७॥

**वर्षन्तीयं घनजलधरैः कालमासाद्य प्रावृट्,**
**क्षीणप्राया स्वयमपगता रिक्तमेघान् विहाय ।**
**को वा लोकेऽप्यविरतगति - र्दुर्मदातङ्कपङ्के,**
**क्षिप्त्वा जीवान् विधिविनिहतः स्थातुमन्ते समर्थः ।। २८ ।।**

सघन मेघों के द्वारा वर्षा करती हुई वर्षा ऋतु, समय आने पर क्षीण-प्राय होकर रिक्त मेघों का परित्याग कर स्वयं चली गयी है । इस संसार में ऐसा कौन है, जो अविराम गति से आगे बढ़ता हुआ प्राणियों को अपने दुर्मद आतङ्क के कीचड़ में डुबोकर, दैव की मार से अन्त में ठहर सका हो ।।२८।।

**गगनमिदमिदानीं भूयशो विक्षतानां,**
**वहति निवहमन्तर्वारि - शून्याम्बुदानाम् ।**
**दयितविरहवह्नि - व्यापिताप - प्रभावाद्,**
**विदलितहृदयानां खण्डजालं दधानम् ।। २९ ।।**

वर्षाकाल समाप्तप्राय होने पर यह आकाश जल शून्य क्षत-विक्षत बादलों के समूह को अपने अन्दर धारण किए है । ऐसा प्रतीत होता है मानो प्रिय के विरह की अग्नि के ताप के प्रभाव से विदीर्ण हृदय के असंख्य खण्डों को अपने अन्दर धारण किए हो ।।२९।।

**घनमलिनदिगन्त - व्याप्त - वर्षा - प्रसारै-**
**रतिपुलिन - जलौघैरुद्धतानां नदीनाम् ।**
**हरितगिरिवनानां पङ्किलानां स्मरन्ती,**
**नगरजनपथानां गच्छति प्रावृडेषा ।। ३० ।।**

मेघों द्वारा धूमिल की हुई दिशाओं में व्याप्त वर्षा के प्रसार से तटों का उल्लंघन कर जाने वाले जल समूह से उन्मत्त नदियों, हरे भरे पर्वत और वनों तथा कीचड़ भरे नगर जनों के मार्गों का स्मरण करती हुई यह वर्षा जा रही है ।।३०।।

इति दूताञ्जनेये महाकाव्ये
रामविरहवर्षावर्णनंनाम
द्वितीयः सर्गः

卐 श्रीरामो विजयतेतराम् 卐

# दूताञ्जनेयम्

## तृतीयः सर्गः

इत्थंकारं जलदबहुले संव्यतीतेऽपि काले,
पश्यन्नेष प्रकृतिसुषमां शारदीयां समन्तात्।
सीतादेव्या विषमविपदां संस्मरन् व्याकुलात्मा,
भूयोऽवोचद् व्यथितहृदयो लक्ष्मणं राघवेन्द्रः ॥ १ ॥

इस प्रकार मेघ समूह वाले वर्षा काल के समाप्त हो जाने पर शारदीय प्रकृति की शोभा को चारों ओर देखते हुए व्याकुलात्मा श्री राघवेन्द्र देवी सीता की विषम विपत्ति का स्मरण करते हुए व्यथित ह्रदय होकर पुनः लक्ष्मण से बोले ॥१॥

कृत्वा लोकं सजलमखिलं प्रावृडेषा व्यतीता,
प्राप्तां भ्रातर्विमलविकसत् - कञ्जगुञ्जद्द्विरेफाम्।
चन्द्रज्योत्स्नाधवलितनिशां पुष्पगन्धाभिरामां,
लोको भूयः शरदमनिशं खञ्जनैरीक्षतेऽसौ ॥ २ ॥

हे भ्राता लक्ष्मण ! समस्त लोक को सजल करके यह वर्षा व्यतीत हो गयी है। अब पुनः यह समाज कमलों पर गुञ्जार करते भ्रमरों से युक्त, पुष्प गन्ध से मनोहर, और चन्द्रमा की चन्द्रिका से धवलित निशाओं वाली इस शरद ऋतु को खञ्जन पक्षियों के आने से देख रहा है ॥२॥

वातोद्धूता जलदपटलाः खण्डशो विद्रवन्तो,
नीलाकाशे धवलवपुषः कामरूपा लसन्ति।
मन्ये द्रष्टुं शरदि सुषमामुल्लसन्त्या धराया,
उड्डीयन्ते मुदितमनसो मानसा राजहंसाः ॥ ३ ॥

नीले आकाश में वायु से उड़ाए जाने के कारण, इधर-उधर दौड़ते हुए, धवल शरीर और अनेक रूप बदलने वाले बादलों के झुण्ड खण्ड-खण्ड होकर, ऐसे शोभित हो रहे हैं, मानो शरद ऋतु में धरती की शोभा देखने के लिए, प्रसन्न मन से मानसरोवर के राजहंस उड़ रहे हों ॥३॥

हृद्यान्येतद् विकचकमलै - र्मत्तभृङ्गैः सरांसि,
पुष्पैर्गन्धै - र्मुखरविहगैः काननान्यर्चितानि।
शुभ्रा नीलाम्बर विलसिता लोलताराङ्कितश्री-
र्मंदाक्रान्ता हरति हृदयं शर्वरी चन्द्रकान्ता ॥ ४ ॥

शरद ऋतु में इन खिले हुए कमल और मतवाले भ्रमरों से जलाशय मनोहर हो रहे हैं। पुष्पों और उनकी गन्ध तथा मुखर पक्षियों से वन, मानो अर्चित हो रहे हैं, शुभ्र नील आकाश रूपी वस्त्र से शोभित चञ्चल तारा रूपी नयन तारा से शोभायमान मन्दाक्रान्ता (मन्द गति वाली) चन्द्रकान्त रात्रि हृदय हर रही है (इस काव्य में प्रमुख छन्द मन्दाक्रान्ता ही है) ॥४॥

लुप्तं वर्षामलिनसलिलेष्वप्यगाधेषु यत्र,
कञ्जं भूयो विमलशरदं प्राप्य फुल्लं सरःसु।
को वा सम्यक् सुखमनुभवेद् दूषितायां समृद्धौ,
सन्न्यायेनार्जितमपि सतां श्रेयसे स्वल्पमेव ॥ ५ ॥

जहाँ वर्षाकाल में अगाध परन्तु मलिन जल में कमल लुप्त हो गया था, वहीं अब निर्मल शरद ऋतु को पाकर वह, जलाशयों में पुनः खिल रहा है। दूषित समृद्धि में भला कौन यथार्थ सुख का अनुभव कर पाता है। उत्तम न्याय के साथ अर्जित की हुई अल्प सम्पदा भी, सत्पुरुषों के लिए मंगलकारक और सुखदायी होती है ॥५॥

यत्राकुर्वन् सुखदसमये मञ्जुलीला - विलासान्,
त्यक्त्वा मित्रं तदपि च गता दुर्दिने येऽसहायम्।
ते वै हंसाः पुनरुपगताः तत्सरः सानुरागम्,
आत्मप्रीत्यै भवति सहजा स्वार्थिनां मित्रतापि ॥ ६ ॥

आनन्ददायक समय में जिन सरोवरों में हंस अपनी मनभावन लीलाएं करते रहे, और जो दुर्दिन (वर्षाकाल, आपत्तिकाल) में अपने मित्र को असहाय त्यागकर कहीं चले गये थे, वे ही हंस अब मनोहर शरदकाल आने पर उन्हीं सरोवरों के पास पुनः बड़ा स्नेह प्रदर्शित करते हुए आ गए। सचमुच स्वार्थी लोगों की सहज मित्रता भी अपनी प्रसन्नता के लिए होती हैं ॥६॥

वर्षाराज्ये सघनमलिनं व्योम भूः पङ्किलाभूत्,
मार्गाण्यासन्नपि जलचयैश्चावरुद्धानि नीचैः।
सम्प्राप्तायां शरदि दिवसे पङ्कजश्रीविलासो,
लोकामोदं निशि वितनुते चन्द्रिकाचारुहासः ॥ ७ ॥

एक वर्षा का राज्य था, जिसमें आकाश सघन (बादलों से घना) मलिन था और भूमि पंक (कीचड़ पाप) से भरी थी और मार्ग जल से (पानी, मूर्खों से) तथा निचाई (दुष्टजनों) से घिर गये थे। अब शरद ऋतु के आ जाने पर दिन, कमल की शोभा का आनन्द देने वाले हैं। और रातें चन्द्रमा की चन्द्रिका से जनता को आनन्द दे रही हैं ॥७॥

चन्द्रज्योत्स्ना - प्रभवसुषमाप्लावितेयं त्रियामा,
भूमिर्जाता धवलवलयै - रञ्जितेव प्रकामम्।
नेत्राण्येतद् विकचकुमुदानीव विस्फार्य शोभां,
पश्यन्तीव प्रकृतिरचितां शारदीयां सरांसि ॥ ८ ॥

यह रात्रि चन्द्रमा की चन्द्रिका से उत्पन्न शोभा में मानो पूरी तरह डूबी हुई हैं। समस्त पृथ्वी उज्ज्वल चन्द्रिका की लहरों से पूरी तरह रंग सी दी गई है और यह सरोवर, ऐसा प्रतीत हो रहा है कि खिले हुये कुमुद रुपी अपने नेत्रों को फैलाकर प्रकृति द्वारा बनाई गई इस शरद ऋतु की शोभा को देख रहे हैं ॥८॥

दूर्वाच्छन्ने हरितवसने प्रांगणे खञ्जनानां,
व्रातः प्रातः स्फुरति शरदः स्वागताय प्रकृत्या।
मन्ये पुष्पाञ्जलिरुपहृतः पीडयत्येष यो मां,
खिन्नात्मानं जनकतनयां स्मारयन् खञ्जनाक्षीम् ॥ ९ ॥

हरे रंग की चादर जैसी घास पर प्रातः काल यह जो खञ्जनों का समूह फुदक रहा है, ऐसा प्रतीत होता है मानों प्रकृति ने शरद के स्वागत के लिए पुष्पांजलि भेंट कर दी हो, यह जो खञ्जनाक्षी सीता का स्मरण दिलाता हुआ मुझ खिन्न आत्मा को और पींडा पहुँचा रहा है। ॥९॥

धन्यास्ते ये शशिनमुदितं स्नेहबद्धाश्चकोराः,
पश्यन्तस्तेऽप्यपलकदृशा चन्द्रिकामापिबन्ति।
भुञ्जन्तेऽग्निं विरहसमये किन्तु हा मादृशा यान्,
कान्तापत्तिप्रभवदहनो नापि दग्धुं समर्थः ॥ १० ॥

वे चकोर धन्य हैं जो उदित होते हुए ही चन्द्रमा को स्नेह से बंधे, देखते हुए, अपलक दृष्टि से चन्द्रिका का पान करते रहते हैं। तथा उसके वियोग के समय अग्नि कणों को खाने लगते हैं। एक हमारे जैसे भी हैं, जिन्हें प्रिया की विपत्ति से उत्पन्न अग्नि भी जलाने में समर्थ नहीं है ॥१०॥

दूरे तिष्ठन्नपरपुलिनेऽपि प्रियामेव पश्यन्,
दैवापन्नां विरहविपदां चक्रवाको धुनोति।
चन्द्रज्योत्स्नाधवलितदिशं प्रेयसीविप्रयोगे,
रामस्त्वेषोऽपनयति निशं कन्दरेऽश्रूणि मुञ्चन् ॥ ११ ॥

चक्रवाक पक्षी रात्रि में तालाब के दूसरे किनारे बैठा हुआ अपनी प्रिया को देखते हुए ही, भाग्य द्वारा दी गयी प्रिया-विरह की विपत्ति को काट डालता है और यह राम प्रिया वियोग में चन्द्रमा की चन्द्रिका से धुली दिशाओं वाली रात को, इस पर्वत कन्दरा में आँसू बहाता हुआ व्यतीत कर रहा है ॥११॥

स्वच्छाकाशस्फटिकसदृशं निर्मलाम्भः सरःसु,
संशोभन्ते कुवलयवनानि प्रफुल्लानि तेषु।
कीदृक् तेषामुपरि पतति स्निग्धभृङ्गावलीयं,
तक्षन्त्येतान्यपि मम मनः शारदोद्दीपनानि ॥ १२ ॥

इस समय स्वच्छ आकाश और जलाशयों में स्फटिक के समान स्वच्छ जल है। जिनमें खिले हुए कमल शोभित हो रहे हैं। उनके ऊपर भी यह भौरों का गिरता हुआ झुण्ड कैसा सुन्दर लग रहा है परन्तु यह शरद ऋतु के उद्दीपन भाव भी मेरे मन को छील रहे हैं ॥१२॥

क्रान्त्यारूढो रविरपि तुलामेष कन्यां विहाय,
दीप्तो राशिर्विमलनभसि द्योतते वृश्चिकोऽयम्।
येनैकस्मिन् विततचुलुके पीत एवाम्बुराशिः,
तन्नामासावुदयमयते तारको दक्षिणस्याम् ॥ १३ ॥

इस शरद काल के आने पर सूर्य, कन्या राशि से आगे बढ़कर तुला पर आ गया है। सन्ध्या में चमकती हुई यह वृश्चिक राशि विस्तृत आकाश में चमक रही है। उधर दक्षिण दिशा में उन अगस्त्य ऋषि के नाम वाला तारा उदय हो रहा है, जिन्होंने अपने विस्तृत चुल्लू में समुद्र को ही पी लिया था ॥१३॥

वर्षातीता शरदुपगता सुप्रसन्ना दिगन्ताः,
पन्थानः सञ्चरणसरला अस्तपङ्कप्रभावाः।
राजानश्चाक्रमणनिरताः शत्रुसीमाभियाने,
रामश्चासौ दमयितुमरिं कालमुद्वीक्षते हा ! ॥ १४ ॥

अब वर्षा बीत गयी है। दिशाएं स्वच्छ प्रसन्न हो रही हैं। कीचड़ का प्रभाव समाप्त हो जाने से मार्ग चलने के योग्य हो गए हैं, अतः राजा लोग भी शत्रु की सीमाओं पर अभियान में लग गए हैं पर यह राम हाय ? अभी भी अपने शत्रु रावण का दमन करने के लिए समय की प्रतीक्षा कर रहा है ॥१४॥

भ्रातर्ब्रूहि प्रियतमसखी भ्रातृजाया त्वदीया,
दुष्टाक्रान्ता परवशतया व्याघ्रविद्धा मृगीव।
मृत्युं प्राप्ता यदि न किमु हा शोकसिन्धौ विलीना,
जीवेदेषा नियतिविवशा रावणातङ्कभीता ॥ १५ ॥

हे भ्राता! बताओ, तुम्हारी भाभी क्या कहीं दुष्ट द्वारा आक्रान्त, व्याध द्वारा पकड़ी गयी मृगी के समान परवशता से मृत्यु को प्राप्त हो गयी है। यदि नहीं, तो क्या वह शोक सिन्धु में डूबी, रावण के आतङ्क से भयभीत, नियति से विवश हो कहीं जी रही होगी? ॥१५॥

भ्रातः! सीता क्वचन भविता कीदृशी वा न जाने,
हेमन्तौ तुहिनपिहिता चन्द्रलेखेव दीना।
किं कुर्वन्ती विपदि किमसौ मां स्मरन्ती कदाचिद्,
रक्षन्ती वा कथमपि भवेज्जीवनं निःश्वसन्ती ॥ १६ ॥

हे भाई! सीता कहां होगी? न जाने कैसी होगी? अथवा हेमन्त ऋतु में तुषार से ढकी चन्द्रलेखा के समान दीन मलिन होगी। इस विपत्ति में क्या करती होगी? क्या कभी मुझे स्मरण करती हुई किसी प्रकार अपने जीवन को रक्षा करती हुई, वह जी रही होगी? ॥१६॥

लङ्कामध्ये निशिचरगणैरावृताकोमलाङ्गी,
पश्यन्ती सा क्वचिदपि जनं ज्ञातपूर्वं न तत्र।
दुर्दान्तेन प्रकृतिकरुणा राक्षसेन्द्रेण सीता,
चेदाक्रान्ता विपदि पतिता मृत्युमेवावहेत् सा ॥ १७ ॥

कहीं ऐसा तो नहीं कि, लङ्का के बीच राक्षसगणों से घिरी हुई वह कोमलाङ्गी, वहाँ कहीं भी अपने किसी पूर्व परिचित को न देखती हुई, प्रकृति से करुण सीता, उस दुर्दान्त रावण द्वारा आक्रमण किए जाने पर विपत्ति में पड़ी हुई, मृत्यु का ही आवाहन कर ले ॥१७॥

आक्रन्दन्ती विवशकुररीव प्रिया मेऽसहाया,
आकाशेन त्वरितगतिना नीयमाना रथेन।
दूरं यावत् कमपि न जनं रक्षकं वीक्ष्य किं वा,
मध्ये सिन्धोर्निजकुलगुरोरङ्क एवापतेत् सा ।। १८ ।।

अथवा, विवश हिरणी की भाँति विलाप करती हुई असहाय मेरी प्रिया, सीता त्वरित गति वाले रथ से आकाश में ले जायी जाती हुई, दूर तक कहीं अपना रक्षक न देखकर अपने कुलगुरु समुद्र के मध्य में कूदकर उनकी गोद में ही समा गयी हो ।।१८।।

मद्ध्यानस्था दुरितचरितं प्रस्तुतं राक्षसेन्द्रं,
नारीचौरं कुटिलहृदयं कामुकं भर्त्सयन्ती।
सा क्षामाङ्गी सजलनयना मां स्मरन्ती कदाचित्,
क्रोधान्धस्य प्रबलनिशितासिप्रहारैर्हता स्यात् ।। १९ ।।

अथवा लंका में मेरे ध्यान में बैठी हुई उस दुरित चरित्र वाले रावण के आने पर उस कुटिल हृदय नारी-चोर कामुक राक्षस राज की निन्दा करती हुई, दुर्बलांगी सजल नेत्रों वाली, सीता मुझे स्मरण करते हुए ही क्रोधान्ध राक्षस के प्रबल खड्ग के प्रहार से ही मर गयी हो ।।१९।।

कोदण्डं मे खलकुलवधोद्दण्डमुद्यत्प्रतापं,
तूणीरं मे भुवनविजयख्यातबाणाभिषिक्तम्।
रामो जीवत्यविकलमसौ बन्धुना लक्ष्मणेन,
भीतिं मा गा अहह ! दयिते ! देवि ! धैर्यं बधान ।। २० ।।

हे प्रिये ! खलकुल का वध करने में उदण्ड, मेरा उद्यत प्रताप वाला कोदण्ड धनुष तथा भुवन विजय के लिए विख्यात बाणों से परिपूर्ण मेरा यह तूणीर, तैयार है। भाई लक्ष्मण के साथ अविकल राम अभी जीवित है। हे दयिते ! तुम भयभीत न होना। हे देवि ! धैर्य बाँधे रखना ।।२०।।

प्राप्यैश्वर्यं सुखपरिचये व्यस्मरन्मां सुकण्ठो,
वालिं हत्वा किमहमलभे केवलं हा ! कलङ्कम् ।
सख्येनैवं किमिह भविता वानरेणाप्यनेन,
जानीयात् को विधिविलसितं मे च दुर्भाग्यलीलाम् ॥ २१ ॥

ऐश्वर्य प्राप्त कर सुख का परिचय होने पर सुग्रीव मुझे भूल गया है। क्या मैंने बालि को मारकर केवल कलङ्क ही प्राप्त किया ? इस प्रकार इस वानर से और इस मित्रता से भी क्या होने वाला है। दैव की चेष्टा और मेरी दुर्भाग्य लीला को कौन जानता है ? ॥२१॥

पश्यन् सीतास्मरणजनिताक्रोशविक्षिप्तमार्यम्,
आज्ञां लब्ध्वा कपिपतिपुरीं लक्ष्मणोऽगात् तदानीम् ।
सुग्रीवस्तद्विततधनुषा धर्षितश्चोग्रवाक्यैः,
त्यक्त्वालस्यं सह हनुमतोपागमद् राघवेन्द्रम् ॥ २२ ॥

तभी, सीता के स्मरण से उत्पन्न आक्रोश से व्याकुल आर्य राम को देखकर, भाई लक्ष्मण आज्ञा लेकर कपिराज की नगरी किष्किन्धा पहुंचे। उनके चढ़े हुए धनुष और कठोर वाक्यों की फटकार से सुग्रीव भी आलस्य त्याग कर हनुमान के साथ श्री राम की सेवा में उपस्थित हो गए ॥२२॥

क्षुब्धोऽप्यन्तःसहजविलसत्स्नेहभावः कपीन्द्रं,
पार्श्वप्राप्तं विनतशिरसं गाढमालिङ्ग्य मित्रम् ।
मज्जन् सीताविरहजलधौ दुर्दिने निःसहायो,
रामो हर्षद्रवितहृदयोऽवाप्तकूलो बभूव ॥ २३ ॥

क्षुब्ध होते हुए भी चारों ओर हृदय में विराजमान जन्मजात स्नेह भावनामय राम, समीप आए हुए, विनत सिर, मित्र सुग्रीव का प्रगाढ़ आलिङ्गन कर, सीता दुःख से उत्पन्न समुद्र में डूबते हुए जैसे एकाएक किनारा पाकर, हर्ष से द्रवित-हृदय हो गए ॥२३॥

भार्यादुःखद्रवितहृदयं मित्रमाश्वास्य रामं,
कालं मासावधिमनुदिशन् धैर्यमालम्ब्य धीरः।
सम्यक् सीताकुशलमचिरादाप्तुकामो जगत्यां,
सुग्रीवोऽपि प्रतिदिशमथ प्रैषयद् वानरर्क्षान् ।। २४ ।।

पत्नी के दुःख से द्रवित-हृदय मित्र राम को आश्वासन देकर, धैर्य धारण कर धीर सुग्रीव ने, एक मास की समयावधि का निर्देश देकर संसार में शीघ्र ही सीता की कुशल पाने के लिए वानरों और ऋक्षों को प्रत्येक दिशा में भेज दिया ।।२४।।

तत्रैवान्ते रघुकुलमणि - र्वानराणां वरिष्ठं,
यूथैः सार्धं जिगमिषुमसौ मारुतिं दक्षिणाशाम्।
आशाबन्धोच्छ्वसितहृदयस्तं समाहूय भूयः,
सीताप्रीत्यै सजलनयनः संदिदेश प्रकामम् ।। २५ ।।

वहीं पर अन्त में वानरों में श्रेष्ठ यूथों के साथ दक्षिण दिशा की ओर जाने को तैयार हनुमान को रघुकुलमणि राम ने, पुनः बुलाकर आशा के बन्धन से उच्छ्वसित हृदय होकर, सजल नयन होते हुए सीता के स्नेह के लिए, जी भरकर सन्देश प्रदान किया ।।२५।।

रामेणोक्तं हृदयदयितां यत् समुद्दिश्य धीमान्,
तत्सन्देशं विनतशिरसा धारयन् धीप्रकोष्ठे।
अन्तःप्रीतेश्चिरपरिचितं स्नेहबन्धप्रतीकं,
दत्तं देव्यै शिरसि धृतवानङ्गुलीयं कपीन्द्रः ।। २६ ।।

अपनी हृदयप्रिया के लिए जो संदेश राम ने दिया था, उसे बुद्धिमान हनुमान ने विनत शिर होकर बुद्धि के प्रकोष्ठ में रखते हुए, अन्तःप्रीति की चिर-परिचित तथा स्नेह बन्धन की प्रतीक, देवी सीता के लिए दी हुई मुद्रिका को उन्होंने अपने शिर पर धारण कर लिया। ।।२६।।

**उल्लङ्घ्याद्रीन् विमलसलिलां कृष्णवेणीमतीत्य ,**
**पश्यन्तो वै गहनविपिनान्यन्तरं कन्दराणाम् ।**
**ते कावेरीपरिसरगता जानकीं मार्गयन्तः ,**
**प्राप्ताः श्रान्ता लवणजलधिं दुस्तरं मानवानाम् ।। २७ ।।**

पर्वतों को पार कर, विमल जलधारा वाली कृष्णा नदी को लांघ कर गहन वन, कन्दराओं के अन्दर देखते हुए, कावेरी नदी के परिसर में पहुंचकर, जानकी की खोज करते थके हुए वे सभी वानर, मनुष्य के लिए दुस्तर लवण समुद्र के तट पर जा पहुंचे ।।२७।।

**पश्यन् यावज्जलधिपुलिने वानराणां निराशा-**
**मृक्षाधीशः पवनतनयं स्मारयामास शौर्यम् ।**
**पादाघातैः क्षितितलमसौ कम्पयंस्तावदेव ,**
**लङ्कां गच्छञ्जयति हनुमान् स्वर्णशैलाभदेहः ।। २८ ।।**

समुद्र के तट पर वानरों की निराशा को देखते हुए जाम्बवान् ने जैसे ही पवनतनय हनुमान को उनके शौर्य का स्मरण कराया, वैसे ही पैर की ठोकर से पृथ्वी तल को कंपाते हुए, स्वर्ण शैल के समान शरीर धारण कर, लंका को जाते हुए उन हनुमान की जय-जयकार होने लगी ।।२८।।

**सकलकपिजनानां पश्यतां पन्नगारि-**
**प्रखरगतिमतन्वीमादधानः कपीन्द्रः ।**
**सलिलनिधिमलङ्घ्यं प्राकृतै - र्लंघमानो ,**
**गगनपथमविन्दन्निर्जरैः सेव्यमानम् ।। २९ ।।**

समस्त वानर वर्ग के देखते ही देखते गरुड़ जैसी विस्तृत तीव्र गति को धारण किए हुये कपीन्द्र हनुमान, सामान्य जन के लिए अलंघनीय समुद्र को लांघते हुए देव गणों से सेवित आकाशमार्ग पर पहुंच गए ।।२९।।

**इतिश्री दूताञ्जनेये महाकाव्ये**
**शरद् वर्णनं नाम**
**तृतीयः सर्गः**

● श्रीरामो विजयतेतराम् ●

# दूताञ्जनेयम्

## चतुर्थः सर्गः

मैनाकाद्रिं विनतशिरसा नागधात्रीमतीत्य,
हत्वा मुष्ट्या पवनपथगां सिंहिकां सिंहनादैः।
वेगापातध्वनितगिरिभिः कम्पयन् राजधानीं,
लङ्काकालग्रह इव पपाताञ्जनेयस्त्रिकूटे ॥ १ ॥

इस प्रकार समुद्र को लाँघते हुए अञ्जनीपुत्र श्री हनुमान मैनाक पर्वत तथा नागमाता सुरसा को नतमस्तक हो पार करके, पवनपथ संचारिणी सिंहिका नाम की राक्षसी को सिंहनाद के साथ मुष्टि प्रहार से मारकर, वेग से उतरने के कारण ध्वनित पर्वतों से राजधानी को कँपाते हुए, लङ्का के कालग्रह की तरह आकाश से त्रिकूट पर्वत पर उतरे ॥१॥

मत्वा लङ्कां दशमुखपुरीं रक्षितां दुर्मदानां,
मायाजालैः कपटनिचयै राक्षसानां समूहैः।
सद्यो लघ्वीं तनुमवहितो धारयन् धैर्यशीलः,
प्राप्तश्चासौ नगरपरिखाद्वारमन्तर्विविक्षुः ॥ २ ॥

यह समझकर कि दशमुख रावण की नगरी लङ्का दुर्मद राक्षसों के समूह के द्वारा भली प्रकार मायाजाल तथा कपट क्रियाओं के द्वारा सुरक्षित है अतः धैर्यशील हनुमान सावधानीपूर्वक, तत्काल अपना लघु शरीर धारण करते हुये अन्दर प्रवेश करने की इच्छा से उस नगर की परिखा के मुख्य द्वार पर पहुँचे ॥२॥

कार्यारम्भे रघुकुलमणिं मानसे सन्निधाय,
यावद् धीमांस्तमसि चलितो गोपयन्नात्मरूपम्।
तावद् मार्गे सपदि परिघं वीक्ष्य सन्नद्धमार्यो,
दृष्टोऽहं वा चकितमनसा दृष्टिमुच्चैर्वितेने ॥ ३ ॥

कार्य के प्रारम्भ में रघुकुल-मणि श्रीराम को हृदय में धारण कर, जब तक बुद्धिमान् हनुमान अन्धकार में अपने शरीर को छिपाते हुए आगे चलें, तब तक सहसा मार्ग में अड़े हुए एक परिघ को देखकर, उस महापुरुष ने, चकित मन से यह समझकर कि मुझे किसी ने देख लिया है, अपनी दृष्टि ऊपर उठायी ।।३।।

कोऽयं लङ्कां विशति विमुखो जीवनादुन्मदान्धो,
भोज्योऽसौ मे कथमिह न मां लङ्किनीं पश्यतीमाम्।
इत्याक्रोशात् परिघमुपरि भ्रामयन्तीमकस्मा-
दुग्रामग्रे विकृतवदनां राक्षसीमीक्षते स्म ॥ ४ ॥

जीवन से विमुख यह कौन उन्मत्त अन्धा लङ्का में प्रवेश कर रहा है। यह मेरा भोज्य बना हुआ लङ्किनी नाम वाली इस राक्षसी को क्यों नहीं देख रहा है'' इस प्रकार आक्रोश से परिघ को ऊपर, घुमाती हुई विकृत मुख वाली उग्र राक्षसी को हनुमान ने अपने सामने खड़े देखा ।।४।।

मुष्टिं सद्योऽशनिमिव मरुद्विक्रमः सन्निपात्य,
मूर्ध्नि क्रूरां रुधिरवमनैः पातयामास भूमौ।
उत्तिष्ठन्ती स्मृतिपथगतं ब्रह्मशापं विचिन्त्य,
प्रोवाचैवं मधुरवचनं लङ्किनी वानरेन्द्रम् ॥ ५ ॥

वायु का वेक्रम धारण करते हुए हनुमान ने तत्काल उसके सिर पर वज्र के समान मुष्टि का प्रहार करके, रुधिर वमन करती हुई, उस राक्षसी को भूमि पर गिरा दिया। कुछ क्षण पश्चात् वह लङ्किनी उठती हुई, स्मरण पथ में आए हुए ब्रह्मा के शाप को विचार कर कपीन्द्र से इस प्रकार मधुर वचन बोली ।।५।।

गच्छ श्रीमन् ! निशिचरपुरीं ब्रह्मशापप्रभावाद् ,
मद्वैकल्यं प्रहरणकृतं ते शिवाय प्रभूयात् ।
प्राप्तो भ्रातर्भयपरिगतो रक्षसां काल ईदृग् ,
जीवेत् कश्चित् प्रलयदहने यस्य रामः शरण्यः ॥ ६ ॥

हे श्री सम्पन्न वानरेन्द्र ! आप लंकापुरी में प्रवेश करें। ब्रह्मा के शाप के प्रभाव के कारण आपके प्रहार से मेरा व्याकुल हो जाना आप के कल्याण के लिए होवें । हे बन्धु ! भय से व्याप्त राक्षसों का अब यह ऐसा समय आ गया, है कि इस प्रलय की आग में कोई वही जीवित रहेगा, जिसके राम शरणदाता होंगे ।६॥

इत्याख्याते पवनतनयो हर्षमुग्धाश्रुपूर्णो ,
भूत्वा चाग्रेऽविशदरिपुरीं निश्चरीं तां प्रणम्य।
दुर्गम्यं स्याद् विपिनमथवालङ्घ्यवारामधीशो ,
धीरस्तत्रारचयति बलात् साहसेन स्वमार्गम् ॥ ७ ॥

इतना कहने पर, हर्ष से मुग्ध और आनन्द से अश्रुपूर्ण होते हुए पवनतनय हनुमान उस राक्षसी को प्रणाम कर आगे बढ़कर शत्रु की नगरी में प्रवेश कर गये। सच है, दुर्गम वन हो अथवा अलंघ्य समुद्र, धीर पुरुष वहाँ बलपूर्वक और साहस से अपना मार्ग बना लेते हैं ॥७॥

तस्मिन् काले नभसि सहसोदीयमानः शशाङ्कः ,
शीतस्पर्शै - र्धवलकिरणैश्चन्द्रिकामावितेने ।
यस्यां लङ्का कनकशिखरैरुन्नतैर्व्योम्नि रेजे ,
स्वर्गङ्गाया विमलसलिले स्वर्णकञ्जावलीव ॥ ८ ॥

उस समय आकाश में सहसा उदय होते हुए चन्द्रमा ने शीत-स्पर्श वाली उज्ज्वल किरणों से चाँदनी फैला दी। जिसके प्रभाव से लंकानगरी आकाश में उठे हुए स्वर्ण शिखरों से ऐसी शोभित हो रही थी मानो आकाश गंगा के निर्मल जल में स्वर्ण-कमलों की पक्तियां खिल रही हों ॥८॥

लङ्काशोभां शरदि शशिनश्चन्द्रिकायां निशीथे,
पश्यँल्लघ्वीं तनुमवतरन् रामकार्ये निमग्नः।
मार्गे रक्षःपरिजनदृशोपेक्षितोऽसौ कपीशो,
दुर्लङ्घ्यां तां निशिचरपते राजधानीं विवेश ॥ ९ ॥

शरद ऋतु की रात में, चन्द्रमा की चन्द्रिका में, लंका की शोभा को देखते हुए, छोटा सा शरीर धारण किए हुए, राम के कार्य में निमग्न वे कपीश हनुमान, मार्ग में राक्षस परिजनों की दृष्टि से बचते हुए राक्षसेन्द्र रावण की उस दुर्लंघ्य राजधानी में प्रवेश कर गये ॥९॥

गेहेष्वन्तःपुरपरिसरेऽन्विष्यतस्तत्र सीतां,
संसुप्तानां प्रियजनभुजाभ्यन्तरे कामिनीनाम्।
नग्नाङ्गानामुपरि पतिता निःस्पृहा निर्विकारा,
दृष्टिः पूता हरतु जगतः कल्मषं वायुसूनोः ॥ १० ॥

समस्त लंका नगरी में सीता की खोज करते हुए श्री हनुमान वहाँ के गृहों में, अन्तःपुर के परिसरों में सीता को खोजते रहे। वहाँ अपने प्रियजनों की भुजाओं में सोती हुई कामिनियों के नग्न अङ्गों पर पड़ी हुई वायुपुत्र हनुमान की निःस्पृह और निर्विकार पवित्र दृष्टि संसार का पाप दूर करे ॥१०॥

वीथीरथ्यानगरपरिखान्तःप्रकोष्ठेषु धीमान्,
सुप्तस्त्रीणां कथमपि मुखान्यप्रमत्तोऽभिपश्यन्।
नैराश्येन व्यथितहृदयो रावणान्तःपुरेऽपि,
भ्राम्यन् रात्रौ जनकतनयां क्वापि नासौ ददर्श ॥ ११ ॥

लंका नगरी में पूरी तरह सावधान बुद्धिमान वे श्री हनुमान सीता की खोज में रात में घूमते हुए भी गलियों मार्गों नगर की परिखा और अन्तःगृहों में सोई हुई नारियों के मुखों को किसी प्रकार हर ओर से देखते हुए, तथा रावण के अन्तःपुर में भी निराशा से व्यथित हृदय, वे कहीं भी जनकपुत्री सीता को नहीं देख सके ॥११॥

तत्राकस्माद् गृहमुपचितं रामनामाङ्कचिन्है-
र्दृष्ट्वा मज्जन् गहनजलधौ प्राप्य कूलं हनूमान् ।
श्रान्तोऽप्यन्तश्चकितनयनो द्वारमागत्य तस्थौ,
ज्ञातुं किं वा वसति नगरे रक्षसां रामभक्तः ॥ १२ ॥

इसी समय अकस्मात् उन्होंने राम नामाङ्कित चिन्हों से परिपूर्ण एक गृह को देखा जिसे देखकर जैसे वे गहन समुद्र में डूबते हुए, किनारा पा गए। थके होने पर भी आश्चर्य चकित नेत्र होकर वे यह जानने के लिए उसके द्वार पर आकर खड़े हो गए, कि देखे क्या कोई इस राक्षस नगरी में राम भक्त भी रहता है ॥१२॥

तुर्ये यामे गृहपतिरगात् संस्मरन् रामनाम,
ज्ञात्वा मित्रं परिचयमदात् स्वामिभक्ताय वीरः ।
सोऽपि स्नेहात् प्रियमिव तमालिङ्ग्य बद्धानुरागः,
प्रोचे भावप्रवणहृदयो गद्गदेन स्वरेण ॥ १३ ॥

रात्रि के चतुर्थ प्रहर आने पर उसके गृहस्वामी राम नाम स्मरण करते हुए, द्वार पर गए, तो वीर हनुमान ने राम भक्त को अपना मित्र समझकर, अपना परिचय दिया। गृहस्वामी भी स्नेह से प्रिय मित्र की भाँति अनुराग प्रदर्शित करते हुए, उनका आलिङ्गन कर, भाव प्रवण हृदय होकर गद्गद् स्वर से बोले ॥१३॥

त्वं जानीथाः कपिवर ! लघुभ्रातरं मां सुरारे-
र्लङ्केशस्य प्रचुरतमसां स्वामिनो राक्षसानाम् ।
यो दुर्दैवादवशपतितः पापसिन्धौ कथञ्चिज्-
जीवत्येवं दशनपरिधौ मूकजिह्वा यथेह ॥ १४ ॥

वे बोले हे कपिवर ! तुम मुझे देवताओं के शत्रु महान तामसी, राक्षसों के स्वामी, लङ्केश रावण का लघु भ्राता समझो, जो दुर्भाग्य से इस पाप के समुद्र में विवश पड़ा हुआ है और यहां किसी प्रकार इस प्रकार जी रहा है, जैसे मुख के अन्दर दांतों के घेरे में मूक जिह्वा रहती है ॥१४॥

**या दुर्दैवाज् जनकतनया रावणेनापहृत्य,**
**यल्लङ्कायामुपवनतरौ रक्षिताऽशोकमूले।**
**तत्सा पापानघपरिचितान् राक्षसान् हन्तुकामा—**
**नीताकालप्रखररसना मृत्युमूर्तिर्मदान्धैः ।। १५ ।।**

यह जो दुर्भाग्यवश, रावण ने सीता का अपहरण करके उन्हें लंकापुरी की वाटिका में अशोक वृक्ष के नीचे रख दिया है। तो उसने सीता नहीं, वस्तुतः इन पापी दुष्कृत्यों से भरे मदान्ध राक्षसों को मारने के लिए काल की प्रखर जिह्वा, और साक्षात् मृत्यु की मूर्ति ही लाकर यहाँ स्थापित कर दी है ।।१५।।

**तद्दुःखेन द्रवितमनसोवाच तं वायुसूनुः,**
**कालो नेयः कथमपि शनैर्धैर्यमालम्ब्य मित्र !**
**हिंस्रः पापैः स्वयमिह खलो हिंस्यते शीघ्रमेव,**
**सन्तः सत्याचरणकुशलास्त्वादृशा निर्भयाः स्युः ।। १६ ।।**

विभीषण के दुःख से दुःखी होते हुए हनुमान ने उनसे कहा—हे मित्र ! तुम्हें धैर्य धारण कर किसी प्रकार समय को बिताना है। क्योंकि हिंसक, दुष्ट पुरुष स्वयं अपने पापों से ही शीघ्र नष्ट हो जाता है और सत्य आचरण में कुशल तुम्हारे जैसे सत्पुरुष तो निर्भय होकर ही रहेंगे ।।१६।।

**यस्मिन् देवा ऋषिमुनिजना वन्दिनो विश्ववन्द्या,**
**नार्यो यस्मिन् प्रसभमशिवै राक्षसै र्विक्रियन्ते।**
**तस्मिन् कश्चिद् वसति नगरे त्वादृशो धर्मनिष्ठः,**
**तद् बीजं स्याद् प्रभुविरचितं भाविनो मङ्गलस्य ।। १७ ।।**

श्री हनुमान ने विभीषण से कहा कि जिस नगर में विश्व वन्द्य देव, ऋषि मुनि बन्दी हैं, जिस नगर में विवश नारियाँ बलात् नीच राक्षसों द्वारा विकृत की जाती हैं, उस नगर में यदि आप जैसा कोई धर्मनिष्ठ पुरुष भी रहता है, तो वह प्रभु द्वारा विरचित भावी मंगल का बीज भी हो सकता है ।।१७।।

इत्युक्त्वाऽसौ पवनतनयस्तेन विज्ञाय मार्गं,
नत्वा मित्रं जनकतनयादर्शनायाभिगच्छन्।
लेभे नार्योऽप्यविरतगती रामकार्ये विरामं,
कुर्वन्ते वै समयविकृतिं कार्यसिद्धौ न धीराः ॥ १८ ॥

इतना कहकर पवनतनय हनुमान ने विभीषण से जानकी की प्राप्ति का मार्ग ज्ञात किया। फिर मित्र को नमस्कार कर जनकपुत्री सीता के दर्शन के लिये, अविराम गति से जाते हुए उन्होंने राम कार्य में कहीं विश्राम भी नहीं किया। निश्चय ही धीर पुरुष कार्य सिद्धि में समय नष्ट नहीं करते हैं ॥१८॥

तत्रोद्याने व्यथितहृदयाशोकमूले निषण्णा,
तप्ता दुःखप्रभवदहने शोकमूर्तिस्वरूपा।
हेमन्ततौं तुहिनपिहिता चन्द्रलेखेव दीना,
दृष्टिं याता जनकतनया दुर्दिने जाह्नवीव ॥ १९ ॥

अशोक वाटिका में पहुंच कर उन्होंने उद्यान में अशोक वृक्ष के नीचे बैठी हुई सीता को देखा वे व्यथित हृदया, दुःखजनित अग्नि में तपी हुई, शोक मूर्ति स्वरुपा, हेमन्त ऋतु में तुषार से ढकी चन्द्रकला के समान दिखाई दीं उन्हें देखकर हनुमान को ऐसा लगा जैसे दुर्दिन (वर्षाकाल) में मलिन धारा वाली गंगाजी हों ॥१९॥

पश्यन् सीतां पवनतनयो निःसहायां विपन्नां,
भूमौ जीर्णासनपरिगतामावृतां राक्षसीभिः।
रोषावेगोद्यतमपि पदं सन्निरुध्य प्रकामं,
ज्ञात्वा सर्वं विधिविलसितं मौनमालम्ब्य तस्थौ ॥ २० ॥

निःसहाय और विपत्तिग्रस्त तथा जीर्ण शीर्ण आसन बिछाए, भूमितल पर बैठी हुई, राक्षसियों से घिरी सीता को देखते हुए, रोष के आवेग में प्रतिरोध करने के लिये ऊपर उठाए हुए पैर को भली-भाँति रोककर हनुमान ने दैव की यह सब लीला है, ऐसा समझकर मौन धारण कर लिया ॥२०॥

**सद्यो लघ्वीं तनुमवतरन् राक्षसानामलक्ष्या–**
**मारुह्यार्यस्तरुमतिजवात् पल्लवान्तर्निलीनः ।**
**कीदृग् धैर्यं भवति महतां कीदृगापन्निवेशः ,**
**को जानीयाज्जगति नियतेः कृत्यमित्याकुलोऽभूत् ।। २१ ।।**

तत्काल वे राक्षसों के लिए अलक्ष्य, लघु शरीर में अवतीर्ण होते हुए, अतिशीघ्र उस अशोक वृक्ष पर चढ़कर, पल्लवों के बीच छिप गए। महापुरुषों का धैर्य कैसा होता है, और कैसा होता है आपत्ति का निवेश, संसार में नियति के कृत्य कौन जान सकता है, इस प्रकार सोचते हुए वे हनुमान व्याकुल हो गए ।।२१।।

**तत्रापश्यद् दशमुखमसौ दुर्वचांसि ब्रुवन्तं ,**
**मन्दोदर्या सह परिजनैः प्रातरागत्य सीताम् ।**
**धन्या सापि प्रसभमवदच्चन्द्रहासादभीता ,**
**रे ! खद्योते द्युतिमति भवेत् किं नलिन्या विकासः ।। २२ ।।**

कुछ समय बाद प्रातः होते ही वहाँ पर, हनुमान ने मन्दोदरी और परिजनों के साथ आकर सीता से दुर्वचन कहते हुए रावण को देखा। धन्य हैं, सीता जी क्योंकि उन्होंने कृपाण से न डरते हुए साहस के साथ कह दिया कि अरे ! खद्योत के चमकने पर क्या कमलिनी का विकास हो सकता है। अर्थात् सीता रूपी कमलिनी राम रूपी सूर्य के सामने ही खिल सकती है ।।२२।।

**दत्त्वा मासावधिमपगतो भीषयन्निःसहायां ,**
**सीतामन्तपुरपरिजनैः सार्धमुद्यत्कृपाणः ।**
**सा पश्यन्ती विपदि विलसद्दैवलीलां विसेहे ,**
**कालं पश्यन् विकलहृदयः साश्रुपातं कपीन्द्रः ।। २३ ।।**

यह सुनकर वह रावण भी कृपाण उठाए, उस निःसहाय सीता को भयभीत करता हुआ, एक मास की अवधि देकर, अन्तःपुर के परिजनों के साथ वापस चला गया। विपत्ति में इस प्रकार दैव लीला के विलास को देखते हुए सीता ने, और समय को देखते हुये विकल हृदय हनुमान ने, अश्रुपात के साथ यह सब सहन कर लिया ।।२३।।

याते तस्मिन् निशिचरपतौ निःसहायामधीरां,
विद्धां बाणैर्विवशकुररीं स्वप्रलापैर्विपन्नाम्।
भूयो भूयो विकलमनलं याचमानामशोकं,
सीतां पश्यन् कपिरपि करादङ्गुलीयं मुमोच ।। २४ ।।

उस निशाचरों के स्वामी रावण के चले जाने पर निःसहाय अधीर और बाणों से विधी हिरणी के समान विलाप करती हुई तथा बार-बार विवश होकर अशोक वृक्ष से अग्नि की याचना करती हुई, सीता को देखकर, कपिवर हनुमान ने भी हाथ से राम की दी हुई मुद्रिका को नीचे गिरा दिया ।।२४।।

ज्ञात्वाऽशोकान्निप्रतितमहो जानकी वह्निपिण्डं,
यावद्धस्ते सपदि कुरुते शोकसंशामनाय।
तावद् रामाक्षरपरिचितां मुद्रिकामश्रुपूर्णा,
साश्चर्यं सा विकचकरणैरीक्षमाणैव तस्थौ ।। २५ ।।

आँखों में आसूँ भरे हुए जानकी ने, अशोक वृक्ष से अग्नि पिण्ड गिरा हुआ समझकर, जैसे ही शोक शान्त करने के लिए उसे हाथ में उठाया। वैसे ही आश्चर्य के साथ वे राम के अक्षर से चिन्हित मुद्रिका को आंखे फाड़े देखती ही रह गयीं ।।२५।।

किम्वोत्तीर्याम्बुधिमरिपुरं प्राप्तावानार्यपुत्रो,
हर्तुं को वा प्रभवति बलाद् मुद्रिकामार्यहस्तात्।
केनानीता कथमधिगतेत्याकुलां त्रस्तनेत्रां,
पश्यन्तीं तां मधुरगिरयोपाक्रमीत् सोऽभिधातुम् ।। २६ ।।

वे सोचने लगीं क्या समुद्र को पार कर आर्यपुत्र श्री राम शत्रु की नगरी में आ गए ? कौन भला, आर्य के हाथ से बलात् मुद्रिका को हरने की शक्ति रखता है ? कौन ले आया ? कैसे प्राप्त हो गयी ? इस प्रकार व्याकुल भयभीत नेत्रों से देखती हुई सीता से हनुमान ने मधुर वाणी द्वारा कहने का उपक्रम किया ।।२६।।

श्री राघवेन्द्रवचनाज्जनकात्मजाता–
मन्वेष्टुमार्यदयितां प्लवगाः भ्रमन्ति ।
इत्थं विवक्षुरपि वाचमसौ नियम्य,
भूयो विचारचतुरो परिचिन्तितोऽभूत् ।। २७ ।।

"श्री राघवेन्द्र के वचनों के आधार पर आर्यप्रिया जनकनन्दिनी सीता को खोजने के लिए वानरगण पृथ्वी पर घूम रहे हैं।" ऐसा कहना चाहते हुए भी वानर श्रेष्ठ हनुमान कुछ विचार करके सहसा दुश्चिन्ता से घिर गए ।।२७।।

मयि कथमियमार्या विश्वसेद् दुर्दिनेऽस्मिन्,
इति मनसि मनस्वी सत्वरं संप्रधार्य ।
मृदुमधुरवचोभिर्मध्यमेन स्वरेण,
रघुपतिवनगाथां गातुमेष प्रवृत्तः ।। २८ ।।

वे विचार करने लगे कि इस विपत्ति काल में यह आर्या सीता मुझपर कैसे विश्वास कर लेगी अतः उस मनस्वी ने तत्काल मन में सोचकर कोमल मधुर वाक्यों से एवं मध्यम स्वर के साथ श्री राम के वनवास की कथा कहना प्रारम्भ कर दिया ।।२८।।

इति दूताञ्जनेये महाकाव्ये
सीतान्वेषणं नाम
चतुर्थः सर्गः

---

卐 श्रीरामो विजयतेतराम् 卐

# दूताञ्जनेयम्

## पञ्चमः सर्गः

आर्यावर्ते दिनकरकुले संभवानां नृपाणां,
शौर्येणापि प्रथितयशसा चर्चिता भूतलेऽस्मिन् ।
नाम्नायोध्या वसतिरलकासन्निभा सम्पदाभि-
र्यस्यास्तीरे वहति सरयूर्मानवान् पावयन्ती ।। १ ।।

आर्यावर्त्त के अन्तर्गत सूर्यकुल में उत्पन्न राजाओं के शौर्य एवं प्रथित यश से भूतल पर चर्चित अयोध्या नामक नगरी है, जो सम्पत्ति में अलकापुरी के सदृश है और जिसके समीप मानवों को पावन करती हुई सरयू नदी बह रही है।।१।।

तस्यां राजा दशरथ इति ख्यातनामा यशस्वी,
पुत्रं रामं वचनविवशः प्रैषयत् काननान्तम् ।
आज्ञां पित्रोः शिरसि निदधद् राघवो लक्ष्मणेन,
पत्न्या सार्धं विपिनमगमद् यौवराज्यं विहाय ।। २ ।।

इस नगर में दशरथ नाम से प्रसिद्ध यशस्वी राजा थे जिन्होंने वचन से विवश होकर अपने पुत्र राम को वन भेज दिया। रघुवंशी राम माता-पिता की आज्ञा शिरोधार्य कर लक्ष्मण और पत्नी सीता के साथ युवराज पद छोड़कर वन को चले गये।।२।।

काले याते सति बहुतिथे दण्डकारण्यमध्ये,
तेषां शान्ताश्रमपरिसरे निर्भयं संस्थितानाम् ।
पार्श्वं याता निशिचरपतेः स्वैरिणी कामरूपा,
कामोन्मत्ता कुटिलभागिनी कामकौतूहलाय ॥ ३ ॥

इस प्रकार दण्डकारण्य में बहुत समय बीत जाने पर अपने शांत आश्रम के परिसर में निर्भय निवास करते हुए उन लोगों के पास, राक्षसेन्द्र रावण की स्वैरिणी कुटिल बहन, जो मन चाहा रूप बना सकती थी, कामोन्मत्त होती हुई, काम क्रीडा के लिए आयी ॥३॥

आशाभङ्गात् कुटिलमनसा जानकीं हन्तुकामा,
सा द्राग् मध्ये विकृतवदना वै कृता लक्ष्मणेन ।
तेनायातं सखरमतुलं राक्षसानामनीकं,
भस्मीभूतं निशितविशिखज्वालया राघवस्य ॥ ४ ॥

जब उसकी आशा भंग हो गयी तो कुटिल मन से उसने सीता को मारना चाहा, पर मध्य में ही लक्ष्मण ने तत्काल उसे कुरूप (नाक कान काट कर) कर दिया। इस कृत्य से खरनामक राक्षस के नेतृत्व में आयी हुई राक्षसों की सेना श्री राघव के पैने बाणों की आग से भस्म हो गयी ॥४॥

तत्रैवार्या तदनु सहसा स्वाश्रमान्ते चरन्तं,
साश्चर्यं सा कनकहरिणं दुर्लभं पश्यति स्म ।
दैवाल्लुब्धाद्भुतकृतिमिमां मन्यमाना धराया,
आनेतुं तं मधुरवचनैः प्रार्थयामास कान्तम् ॥ ५ ॥

कुछ समय पश्चात् आर्या सीता ने अपने उसी आश्रम के पास घूमते हुए एक दुर्लभ स्वर्ण मृग को आश्चर्य से देखा। दुर्भाग्यवश इसको धरती की अद्भुत कृति मानती हुई उन्होंने मधुर वचनों से कान्त श्री राम से उसे ले आने के लिए प्रार्थना की ॥५॥

तत्रारण्ये कनकहरिणं हन्तुमार्ये प्रयाते,
रामे भ्रान्त्या नियतिविवशे लक्ष्मणे चानुयाते।
शून्यं दृष्ट्वाश्रमपरिसरं राक्षसेन्द्रश्छलेन,
सीतां साध्वीं रघुकुलवधूं निःसहायां जहार ॥ ६ ॥

वहाँ वन में आर्य राम के स्वर्ण-मृग मारने के लिए जाने और भ्रान्तिवश विकल लक्ष्मण के भी इनके पीछे चले जाने पर, शून्य आश्रम परिसर को देखकर राक्षसेन्द्र रावण ने छल द्वारा रघुकुल-वधू निःसहाय साध्वी सीता का हरण कर लिया ॥६॥

हत्वा मायामृगमतिखलं राक्षसं राघवेन्द्रः,
प्रत्यागच्छत् विकलमनसा सानुजः पर्णशालाम्।
तत्रालब्ध्वा जनकतनयां भ्रातरौ शोकमग्ना-
वज्ञासातां मुनिजनमुखादेव सीतापहारम् ॥ ७ ॥

अत्यन्त दुष्ट माया मृग रूपधारी राक्षस को मारकर व्याकुल मन से भाई के साथ ही राघवेन्द्र पर्णशाला में लौटे। वहाँ जनकतनया को न पाकर शोक में डूबे हुए दोनों भाइयों ने मुनियों के मुख से ही सीता के अपहरण की बात जान ली ॥७॥

रामोऽन्विष्यन् जनकतनयां प्राप्तवान् ऋष्यमूकं,
भीतोऽवात्सीत् कपिरनुचरैर्यत्र सुग्रीवनामा।
सार्धं तेन द्रवितहृदयस्तत्र सख्यं विधाय,
चैकनैव प्रबलमवधीद् मित्रशत्रुं शरेण ॥ ८ ॥

जनकतनया सीता की खोज करते हुए राम, ऋष्यमूक पर्वत पर आ पहुँचे, जहाँ भयभीत सुग्रीव नामक वानर अपने अनुचरों के साथ निवास करते थे। दयालु राम ने वहाँ उनके साथ मित्रता करके, एक बाण से ही, मित्र के प्रबल शत्रु बालि को मार दिया ॥८॥

तत्सम्प्राप्ते जलदसमयेऽसंभवे चाभियाने,
रामो भ्रात्रा सह गिरिगुहामेत्य कालं निनाय।
आयातायां शरदि सुलभे लोकमार्गे समस्ते,
विश्वेऽन्वेष्टुं जनकतनयां कार्यमारब्धमेतत् ॥ ९ ॥

तभी वर्षाकाल के प्रारम्भ हो जाने और अभियान के असम्भव हो जाने पर श्री राम ने भाई के साथ पर्वत की गुफा में जाकर समय व्यतीत किया। शरद ऋतु के आ जाने पर जन सामान्य के मार्गों के सुलभ हो जाने पर समस्त विश्व में जनकतनया सीता की खोज का यह कार्य प्रारम्भ हो गया है ॥९॥

किष्किन्धाया अधिपतिरभूद् यस्तु रामप्रभावात्,
सुग्रीवोऽपि प्रतिदिशमसौ प्रैषयद् वानरर्क्षान्।
तेषामेको विततमधुनोल्लङ्घ्य वारामधीश-
मत्रान्विष्यन् रघुकुलवधूमागतोऽयं हनूमान् ॥ १० ॥

सुग्रीव, जो राम के प्रभाव से किष्किन्धा के अधिपति हो गए थे उन्होंने वानर तथा ऋक्षों को प्रत्येक दिशा में भेजा है। उन्हीं में से एक यह हनुमान नामक वानर रघुकुल-वधू का अन्वेषण करते हुए, विशाल समुद्र को पार कर यहाँ आया है ॥१०॥

ज्ञातुं कश्चिद् दयितचरितं वक्ति वा विभ्रमो मे,
दृष्टिं भीता स्वरपरिचयादुन्नयन्ती तदानीम्।
सीता लघ्वीं सघनविटपे पल्लवान्तर्निलीनां,
गोलाङ्गूलप्रकृतिकलितामाकृतिं सा ददर्श ॥ ११ ॥

तभी, यह जानने के लिए, कि कोई मेरे प्रियतम का चरित कह रहा है या मेरा भ्रम है, इस प्रकार भयभीत होती हुई, स्वर की पहचान से दृष्टि को ऊपर उठाती हुई सीता ने सघन वृक्ष के पत्तों में छिपी हुई लंगूर की प्रकृति से मिलती एक छोटी आकृति को देखा ॥११॥

किम्वा भव्यं यदपि न भवेदत्र लङ्कानगर्यां,
यस्यामास्ते वसतिरनिशं मायिनां राक्षसानाम्।
इत्याशंक्याकृतिमपि कथां मायया मन्यमाना,
सीतारोषप्रभववचनं व्याजहाराञ्जनेयम् ॥ १२ ॥

ऐसी क्या होनी है, जो इस लङ्का नगरी में नहीं हो सकती जहाँ मायावी राक्षसों का निरन्तर निवास रहता है। यह आशंका करके, आकृति और राम-कथा को माया रचित मानती हुई, सीता हनुमान से रोषपूर्ण वचन बोली ॥१२॥

त्वं जानीथा दशमुख! बलाद् वा छलाज्जानकीय-
मार्यं त्यक्त्वा कमपि मनसाप्याप्नुयात् कल्पनैव।
या सीता त्वत्परुषवचनाच्चन्द्रहासान्न भीता,
सा किं मायाप्लवगवपुषा लुभ्यते ते वचोभिः ॥ १३ ॥

हे दशमुख! तुम्हे जान लेना चाहिए कि बल से या छल से यह सीता आर्य राम को छोड़कर, किसी अन्य का, मन से भी चिन्तन करले यह कल्पना ही है। जो सीता तुम्हारे कठोर वचन और तुम्हारी तलवार से नहीं डरी, वह क्या मायावी वानर शरीर और इन वचनों के लोभ में आजाएगी ॥१३॥

किं ते लोकोत्तरभुजबलै रक्षसामाधिपत्यैः,
किं वा लब्धैरपि बहुतरै र्वैदिकैश्चिन्तनैर्वा।
लोकानां वा किमुत विजयैर्यत् तवेयं छलेन,
शक्तिर्नारीहरणसुलभाऽस्तेऽद्य धिग् राक्षस! त्वाम् ॥ १४ ॥

तुम्हारी इस अलौकिक भुजाओं की शक्ति और राक्षसों के स्वामित्व से क्या? इसी प्रकार अनेकों वरदानों के प्राप्त कर लने और वेद शास्त्रों के चिन्तन से भी क्या लाभ? और अनेक लोकों के विजय से भी क्या हुआ? जब तुम्हारी यह शक्ति आज छल के द्वारा नारियों के अपहरण करने में ही सुलभ है, अरे राक्षस! तुझे धिक्कार है ॥१४॥

इत्याक्रोशात् सरुषमसकृद् धर्षयन्ती कपीन्द्रं,
मत्वा मायादशमुखममुं राघवं साह्वयन्ती।
ऊचे स्वामिन् ! रघुकुलवधूस्ते प्रिया निःसहाया,
सीता प्राणांस्त्यजति मरणं श्रेयसे जीवनाद् वै ।। १५ ।।

इस प्रकार वे वानरेन्द्र हनुमान को मायावी रावण मानकर रोष के साथ बार-बार फटकारती हुई, राम को पुकारती हुई कहने लगी। हे स्वामी ! यह रघुकूल वधू और तुम्हारी प्रिय भार्या अब मृत्यु को वरण कर रही है। क्योंकि यहाँ निश्चय ही जीवन से मरण ही श्रेयस्कर है ।।१५।।

सीता भीताम्रियत इह चेन्निष्फलोऽयं प्रयासो,
व्यर्थीभूतं चरितमखिलं स्वामिनो मित्रतायाः।
को वा जीवेत् तदनु सहसा चिन्तयन्नाञ्जनेयो,
वृक्षाद् धीरोऽवनितलमतोऽवातरत् सत्वरं सः ।। १६ ।।

'यदि यह भयभीत सीता मर गयी तो यह प्रयास निष्फल हो गया और स्वामी सुग्रीव की मित्रता का सारा चरित व्यर्थ हो गया। फिर कौन जीवित रहेगा'' सहसा यह सोचते हुए धैर्यशाली वे आञ्जनेय हनुमान, इसलिए शीघ्रतापूर्वक वृक्ष से पृथ्वी तल पर उतर आए ।।१६।।

लघ्वीभूतां तनुमुपगतः सन्मुखं तत्र देव्याः,
भीतायाः अप्यवनिपदवीमानयन् मस्तकान्तम्।
भूयो भूयः करुणहृदयं दर्शयन्नश्रुजालै-
र्हस्तौ बद्ध्वा मधुरवचसा किञ्चिदूचे हनूमान् ।। १७ ।।

वहाँ पर अपने शरीर को छोटा बनाए, भयभीत देवी सीता के सामने, अपने मस्तक को प्रणाम की मुद्रा में पृथ्वी पर टेकते हुए, बार-बार अश्रुजाल से अपने करुण हृदय को दिखाते हुए, हनुमान हाथ जोड़ कर मधुर वाणी से कुछ बोले ।।१७।।

मातः ! किञ्चिच्छलमिह न वै वानरोऽहं हनूमान् ,
सुग्रीवस्य प्रियसहचरः किङ्करो राघवस्य ।
उल्लङ्घ्याब्धिं यदनयमिदं रामनामाङ्कितं तत् ,
तेऽभिज्ञातं रचयितुमलं मायया कोऽङ्गुलीयम् ॥ १८ ॥

हे माता ! निश्चय ही यहाँ कोई छल नहीं है। मैं सुग्रीव का प्रिय सहचर, राघवेन्द्र राम का सेवक, हनुमान हूँ। समुद्र को पार कर के राम नाम से अंकित, तुम्हारी चिर परिचित, जिस अगूंठी को मैं लाया हूँ उसे माया से, इस संसार में, कौन बना सकता है ॥१८॥

त्वामन्वेष्टुं कपिकुलबलं प्रेषयन् राघवेन्द्रो ,
मामाहूय व्यथितमनसा सन्दिशन्नात्मवृत्तम् ।
यां विश्वासात् प्रियतमसखीमर्पयामास मह्यं ,
सा वै मातः ! प्रभुकरतलान्निर्गता मुद्रिकेयम् ॥ १९ ॥

तुम्हें खोजने के लिए वानरों की सेना को भेजते हुए राघवेन्द्र ने मुझे बुलाकर व्यथित मन से अपना सन्देश देते हुए, जिस परमप्रिय सखी मुद्रिका को विश्वास के साथ मुझे दिया है, हे माता ! निश्चय ही प्रभु के करतल से निकली हुई, यह वही मुद्रिका है ॥१९॥

क्षीणां पश्यंस्तव तनुलतां राक्षसैः पीड्यमानां ,
दुःखाम्भोधिं गहनमितरः को नु मातुं समर्थः ।
कीदृग् भार्याविरहदहनः संतपत्यार्यमेष ,
दग्धो देहः सजलनयनै रक्ष्यतेऽश्रुप्रवाहैः ॥ २० ॥

राक्षसों द्वारा पीड़ित क्षीण शरीर को देखते हुए, तुम्हारे गहन दुःखरूपी समुद्र को, अन्य कौन नाप सकता है। किन्तु पत्नी-विरह की यह आग आर्य राम को ऐसा दग्धकर रही है कि ज्वलित शरीर को जल भरे हुए नेत्र, आंसुओं की धार से बचा रहे हैं ॥२०॥

नायं शेते निशि न दिवसेऽपि प्रसन्नो मुखेन,
मेघालोके नयनजलदे वर्षतः पूर्वमेव।
भार्यादुःखव्यथितमनसे रोचते शारदीया,
चन्द्रज्योत्स्नापि च न विकसत्पंकजश्रोः सरःसु ॥ २१ ॥

वे रात में सोते नहीं हैं दिन में भी मुख से प्रसन्न नहीं दिखाई देते हैं। बादलों के देखने पर उनके नेत्र रूपी मेघ पहले ही बरसने लगते हैं। अपनी पत्नी के दुःख से व्यथित चित्त वाले राम को शरद ऋतु के चन्द्र की चन्द्रिका और सरोवरों में खिले हुए कमलों की शोभा रुचिकर नहीं लगती है ॥२१॥

एकान्ते स स्मरति विकलस्त्वद्दशां दीनभावो,
ध्यानस्थोऽपि त्वरितमसकृच्चाह्वयन्नूर्ध्वबाहुः।
सीते ! सीते ! किमिति विलपस्यागतोऽस्त्येष रामो,
मा भैषीस्त्वं सहजकरुणो रोदयत्यन्यलोकान् ॥ २२ ॥

एकान्त में बैठे हुए वे दीन भाव से तुम्हारी दशा का स्मरण करते हैं। ध्यानस्थ भी एकाएक भुजाओं को उठाकर तुम्हें बार-बार पुकारते हुए, हे सीते! हे सीते! तुम क्यों विलाप कर रही हो, यह राम आ गया है, तुम डरो नहीं। इस प्रकार स्वाभाविक करुण होते हुए वे अन्य लोगों को रुला देते हैं ॥२२॥

भ्राम्यन् वृक्षानुपवनलतापुष्पकुञ्जानुपेत्य,
भग्नग्रीवांश्चकितहरिणान् पृच्छति त्वामधीरः।
टङ्कारेण क्वचन धनुषः कम्पयन्नद्रिश्रृङ्गान्,
रोषारुण्यं दमयितुमरींश्चक्षुषोः संबिभर्ति ॥ २३ ॥

कभी वन में घूमते हुए वे वृक्षों और उपवनलता कुञ्जों के पास जाकर उनसे और गर्दन को तिरछा करके चकित होकर देखने वाले मृगों से, अधीर होकर तुमको पूछते हैं, और कहीं पर धनुष की टंकार से पर्वत शिखरों को कँपाते हुए शत्रुओं को दमन करने के लिए नेत्रों में क्रोध की अरुणाई को धारण कर लेते हैं ॥२३॥

दुर्दम्यास्ते हृदि विकलता त्वद्वियोगानुभूतिः,
रम्या चैषा प्रकृतिरपि तद्वेदनामातनोति।
कान्ता कञ्जावलिरपि दिने कुन्दमाला निशाया-
मुद्वेगेन क्षुभितमनसे रोचते नापि तस्मै ॥ २४ ॥

उनके हृदय में तुम्हारे वियोग की अनुभूति और व्याकुलता दु:सह हो रही है यहाँ तक कि यह मनोहर प्रकृति भी उनकी वेदना को बढ़ा देती है। दिन में सुन्दर खिले हुए कमल कुञ्ज और रात्रि में कुमुदावली भी उद्वेग से व्याकुल उनके मन को नहीं भाते हैं ॥२४॥

चन्द्रालोके स्मरति सहजस्निग्धमुग्धाननं ते,
हंसैः कान्ता गतिरपि तव स्मार्यते नित्यमेव।
अस्यां सम्यक् शरदि विलसत्खञ्जना ईक्षणे ते,
फुल्लारण्ये कुसुमलतिका स्मारयत्यङ्गयष्टिम् ॥ २५ ॥

चन्द्रमा को देखकर वे तुम्हारे सहज स्निग्ध मुग्ध मुख का स्मरण करने लगते हैं। हंस नित्य ही तुम्हारी मनोहर गति का स्मरण कराते हैं। इस शरद ऋतु में फुदकते हुए खञ्जन तुम्हारे नेत्रों और वन में फूली हुई कुसुम लता तुम्हारी देहलता का स्मरण कराते हैं ॥२५॥

तत् सन्देशं शृणु प्रियतमस्नेहरागानुबद्ध-
मन्तःपीडातपन - विगलन्मानसोद्रेकपूरम्।
भावावेगात् किमिव कथितं रुद्धकण्ठेन शब्दैः,
शेषं सर्वं स्मृतिसहचरैरक्षिभिश्चाश्रुपूर्णैः ॥ २६ ॥

इसलिए हे माता! राम का वह सन्देश सुनो जो प्रियतम के स्नेह और अनुराग से बँधा हुआ है और जिसमें आन्तरिक पीड़ा की तपन से मानस का उफान आया है। भावों के आवेग से रुद्ध कण्ठ के कारण, जिसे शब्दों के द्वारा तो कुछ ही कह मिला है किन्तु स्मृति के सहचर अश्रुपूर्ण नेत्रों ने शेष सब कह दिया है ॥२६॥

इत्याख्याते चकितनयना प्राप्तसञ्जीवनीव,
कर्णापूरश्रवणमधुरं वृत्तमाकर्णयन्ती।
प्रीत्या चासौ सरससुधया मानसं पोषयन्ती,
वीणानादैर्मुदितहरिणीवोन्मुखीभूय तस्थौ ॥ २७ ॥

इतना कहने पर, चकित नेत्रों वाली जिन्हें जैसे संजीवनी प्राप्त हो गयी हो, कानों को भरने वाले, सुनने में मधुर सन्देश को सुनती हुई, प्रेम की सरस सुधा से मन को तृप्त करती हुई वे सीता जी, वीणा के स्वर से प्रसन्न हिरणी की भाँति उन्मुख होकर बैठ गयीं ॥२७॥

इत्याश्वस्तां प्रियतमकथां श्रोतुमुत्कण्ठितां ता-
लालोक्यार्यां मनसि सहसा मोदमावाहयन् सः।
यादृग् रामो यदपि वचनं प्रोक्तवान् शब्दजालैः,
तादृग् वाचा वचनचतुरो मारुतिर्व्याजहार ॥ २८ ॥

इस प्रकार हनुमान के वचनों से पूरी तरह आश्वस्त और अपने प्रियतम की कथा को सुनने के लिए उत्कण्ठित सीता को देखकर सहसा मन में प्रसन्नता को धारण करते हुए वचन चातुरी में निपुण हनुमान ने राम के द्वारा जिस प्रकार जैसे शब्दों से जो वचन कहे गए थे, उसी प्रकार अपनी वाणी से कहना प्रारम्भ कर दिया ॥२८॥

सद्यो ध्यानान्तःपरिणतस्य प्रबुद्धस्य तस्य,
चिद्वृत्तौ यन्निहितिमखिलं यादृशं राघवोक्तम्।
भावोद्बुद्धं विरहवचनं स्नेहवाक्यं प्रियायै,
निर्लिप्तस्याप्यवहितमतेस्तादृशं वाह्यमागात् ॥ २९ ॥

तत्काल ध्यान में अतः स्थित हो जाने वाले, प्रबुद्ध श्री हनुमान की चेतन वृत्ति में जो जैसा राघवेन्द्र श्री राम का कहा हुआ समस्त सन्देश सुरक्षित रखा था, जिसमें भावना से उठे हुये प्रिया के लिए विरह वचन और स्नेह से भरे वाक्य भी थे, निर्लिप्त रहते हुए भी उनकी सावधान बुद्धि से वस ही बाहर आने लगे ॥२९॥

मनसि वचसि काये रामभक्तस्वरूपो,
विमलमतिमुपेतोऽन्तःप्रबुद्धो हनूमान्।
प्रभुविरहवचांसि स्वप्रियायै यथावत्,
शिशुसरलवचोभिर्निर्विकारोऽन्वकार्षीत् ॥ ३० ॥

मन वचन और शरीर में राम भक्त का ही स्वरूप धारण किए विमल बुद्धि एवं अन्तःकरण से प्रबुद्ध श्री हनुमान ने प्रभु श्री राम द्वारा अपनी प्रिया सीता जी के लिए कहे हुए वचनों का यथावत् निर्विकार भाव से शिशु के सरल वचनों के समान अनुकरण करते हुए कहना प्रारम्भ कर दिया ॥३०॥

प्रबलरिपुजनानां रक्षसां व्यूहमध्ये,
बहुविततमगाधं सिन्धुमुल्लङ्घ्य सीताम्।
कपिरपि कुशलं चेद् वक्तुमीशः प्रियस्य,
प्रभुचरितमपारं को नु मातुं समर्थः ॥ ३१ ॥

प्रबल शत्रु राक्षसों के व्यूह के मध्य में अति विस्तृत अगाध समुद्र को पार करके यदि वानर जानकी को उनके प्रियतम की कुशल बताने में समर्थ हो सकता है तो परमेश्वर प्रभु के अपार चरित्र को भला कौन नाप सकता है ॥३१॥

इति श्री दूताञ्जनेये महाकाव्ये
सीतान्वेषणं नाम
पञ्चमः सर्गः समाप्तः

---

卐 श्रीरामो विजयतेतराम् 卐

# दूताञ्जनेयम्

## षष्ठः सर्गः

सीते ! कान्ते ! हृदयदयिते ! वल्लभे जीवनस्य,
सन्देशयं वै कथमिव भवेन्नैव जाने प्रियेऽहम् ।
जाने चैतत् कुलिशहृदयं निष्ठुरं राघवस्य,
यन्नोद्भिन्नं विषमदहने त्वद्वियोगेऽधुनापि ।। १ ।।

हे सीते, कान्ते, हे हृदय प्रिये ! हे प्राण वल्लभे ! यह मैं, नहीं जानता हूँ कि सन्देश वचन कैसे भेजे जाते हैं। पर मैं केवल राम के इस निष्ठुर वज्र समान हृदय को जानता हूँ जो तुम्हारे इस विषम वियोग में, इस विषम विरह की आग में भी आज तक नहीं फटा है ।।१।।

या सम्पत्तौ विपदि सहजां धीरतामादधाना,
हर्षे शोके सरलहृदया निश्छला निर्मलासीत् ।
मद्विश्वासाद् गहनविपिने वञ्चिता साऽसहाया,
तत् को रामे मयि कथमहो विश्वसेद् भूतलेऽस्मिन् ।। २ ।।

जो सम्पत्ति और विपत्ति में सहज धैर्य को धारण किए हुए हर्ष और शोक में सरल हृदया, निश्छल और निर्मल रही है, वहीं मेरे विश्वास से गहन वन में असहाय अवस्था में छली गयी, तो अब इस पृथ्वी पर, मुझ राम पर कौन कैसे विश्वास करेगा ।।२।।

यस्याः पाणिग्रहणमकरोदग्निसाक्ष्यं विधाय,
मुग्धा भार्या रघुकुलवधूर्मन्त्रपूता मनोज्ञा।
घोरेऽरण्येऽवशमपहृता यस्य विश्वासमेत्य,
सोऽयं जीवत्यशनिकठिनस्तद्वियोगेऽपि रामः ॥ ३ ॥

इस राम ने अग्नि को साक्ष्य बनाकर जिसका पाणिग्रहण किया था उस मन्त्र जैसी पवित्र, मनोहारिणी, मुग्धा, रघुकुल वधू का, जिस के विश्वास में आकर, घोर वन में विवशता वश अपहरण कर लिया गया, वही वज्र जैसा कठोर यह राम, उसके वियोग में भी जी रहा है ॥३॥

व्यर्थीभूतं परिघसदृशं यस्य बाहुद्वयं वै,
कोदण्डोऽयं निशितविशिखा विक्रमश्चापि शौर्यम्।
मार्गे भ्रान्तो व्रजति विकलः सानुजो रुद्धकण्ठः,
सीतां पृच्छन् गिरिवनलतापादपान् सैष रामः ॥ ४ ॥

जिसकी परिघ जैसी दोनों भुजाएं व्यर्थ हो गयीं जिसका यह कोदण्ड, पैने बाण, विक्रम और शौर्य व्यर्थ हो गये हैं। यह वही राम मार्ग में भटकता हुआ, भ्राता के साथ विकल और रुँधे कण्ठ से वन, पर्वत, लता और वृक्षों से सीता को पूछता हुआ घूम रहा है ॥४॥

शास्त्रे दृष्टाः क्वचिदपि कदा वा श्रुताः केन लोके,
इत्थंभूताः कनकहरिणा हारिणो लोचनानाम्।
मुग्धस्तस्मिँस्तव च वचने कीदृगासं विमूढो,
दैवस्यासीदगमचरितं किञ्च कालो बलीयान् ॥ ५ ॥

नेत्रों को हरण करने वाले ऐसे स्वर्ण मृग कहीं किसी ने शास्त्र में लिखे देखे हैं या समाज में कब कहीं सुने हैं, फिर भी उस हिरण और तुम्हारे वचनों पर मैं कैसा विमूढ़ हो गया था। यह दैव का ही अगम चरित्र था और कुछ काल भी, बली था। जिसके कारण यह सब हो गया ॥५॥

**तत्रारण्ये कपटचरितै राक्षसैरावृतेऽपि ,**
**हत्त्वा रक्षःकुलमनुदिनं वैरवृद्धिं विधाय ।**
**यन्मायाविप्रकृतिसु वयं मायिनो नाभवाम ,**
**तत् प्राणान् मे दहति निशितं शूलमन्तर्निखातम् ।। ६ ।।**

कपट चरित्र वाले राक्षसों से भरे हुए उस वन में, आए दिन राक्षस कुल का वध करके और इस प्रकार बैर बढ़ाकर भी, जो हम लोग मायावी प्रकृति वालों के लिए मायावी नहीं बने, वही हृदय के भीतर गड़ा हुआ पैना शूल मेरे प्राणों को जला रहा है ।।६।।

**तस्मिन् मायावपुषि हरिणे पातयत्येव बाणं ,**
**यन्मन्नामग्रहणमकरोल्लक्ष्मणस्यापि रक्षः ।**
**तत् तस्याभूदमरनगरीगोपुरोद्घाटनाय ,**
**कुम्भीपाकं नरकमददात् तत्तु रामाय भूमौ ।। ७ ।।**

उस मायावी हिरण रुपी राक्षस पर बाण मारते ही उसने जो मेरा और बाद में लक्ष्मण का नाम लिया था वह पुकारना तो उस राक्षस के लिए स्वर्ग का द्वार खोलने वाला बन गया परन्तु वही उच्चारण राम के लिए पृथ्वी पर कुम्भीपाक नरक की आग दे गया है अर्थात् राम नाम के फलस्वरुप राक्षस को स्वर्ग प्राप्त हो गया और मेरी प्रिया का हरण हो गया ।।८।।

**प्रत्यागच्छन् दनुजजनितं चिन्तयन् व्यूहजालं ,**
**सर्वं भूयात् कुशलमुटजे प्रार्थयन् दैवतानि ।**
**ऐक्षं यावद् विकलमवशं लक्ष्मणं धावमान-**
**मार्येऽजानां विपदि दयिते ! त्वं गता तावदेव ।। ८ ।।**

उस राक्षस के द्वारा रचित कपट व्यूह जाल पर विचार करते हुए वापस लौटते हुए, 'आश्रम में सब कुशल होवे' इस प्रकार देवताओं से प्रार्थना करते हुए मैंने, जैसे ही विवश, और व्याकुल, लक्ष्मण को दौड़ते आते हुए देखा, हे आर्ये ! हे प्रिये सीते ! मैंने तभी जान लिया, कि तुम विपत्ति में पड़ गयी हो । क्योंकि अकेले वन में तुम्हें छोड़कर लक्ष्मण का आना आश्चर्यजनक था ।।८।।

**सौमित्रोक्तैर्व्यथितवचनैर्वृत्तमाकर्ण्य भीतो,**
**वाञ्छन् सर्वं कुशलमचिराद् धावमानो वनेऽहम्।**
**प्राप्तस्तत्रोटजपरिसरं यत्र मायाकुरङ्गं,**
**पश्यन्ती त्वं सरलहृदये! कीदृगासीर्विमुग्धा॥ ९॥**

तभी पास आकर लक्ष्मण द्वारा कहे गये व्यथापूर्ण वचनों से सारा हाल जानकर भयभीत तुम्हारी सब प्रकार कुशल चाहता हुआ मैं तत्काल वन में दौड़ता हुआ पञ्चवटी के आश्रम परिसर में, वहाँ पहुंचा जहाँ पुष्प चयन करती हुई तुम उस मायावी स्वर्ण मृग को देखकर विस्मित और उसको पाने के लिए मुग्ध हो गयी थीं॥९॥

**शून्यं पश्यन्नुटजमचिरात् त्वां विना निःसहायो,**
**धावन्नन्तर्बहिरनुपदं चाह्वयंस्त्वां प्रमत्तः।**
**तस्थौ द्वारि क्षणमवहितस्त्वत्प्रतीक्षाकुलोऽहं,**
**दूरे दृष्टिक्रममनुसरन्नागता त्वं न वेति॥ १०॥**

कुटी को शून्य देखता हुआ, तुम्हारे विना निःसहाय मैं तत्काल भीतर-बाहर बराबर दौड़ता हुआ, पागल की भाँति तुम्हें पुकारता हुआ तुम्हारी प्रतीक्षा में व्याकुल क्षण भर के लिए द्वार पर ध्यान लगाकर दूर तक दृष्टि दौड़ाता हुआ बैठ गया कि तुम आ रही हो या नहीं। मेरे मन में यह भ्रम भी हुआ कि कहीं तुम यहीं कहीं गयी न हो॥१०॥

**आसीन् मूर्तिः कुसुमनिचयैरर्चिता तत्र शम्भो-**
**र्दत्तं चार्घ्यं दिवसपतये होमवह्निः प्रदीप्तः।**
**अर्चन्त्या यज्ज्वलितमचिराच्छ्रेयसे मे तदानी-**
**मासीद् दीप्तं तदपि दयिते! दीपदानं तथैव॥ ११॥**

उसी कुटीर में भगवान शिवजी की मूर्ति तुम्हारे द्वारा पुष्प समूह से अर्चित की हुई थी। सूर्य के लिये अर्घ्य दिया हुआ था, हवन की अग्नि जल रही थी और मेरे कल्याण के लिए ईश की पूजा करते हुए कुछ देर पहले जिसे प्रज्वलित किया था वह दीपक भी उसी प्रकार अब भी जल रहा था। इससे प्रतीत होता था कि मेरे जाने के बाद मेरे कल्याण के लिए यह सब तुमने किया था॥११॥

अग्नौ पात्रे यदपि निहितं भोज्यमार्ये ! तदानी–
मासीद् धूमोद्वमनविफलं पच्यमानं तथैव ।
गोदावर्या जलपरिचिता त्वद्भुजस्नेहलुब्धा,
तत्रैवासील्ललितकलशी त्वत्प्रतीक्षोन्मुखीव ।। १२ ।।

हे आर्ये ! उस समय तुमने आग पर पात्र में जो भी पकने के लिए रखा था, वह धुँआ उगलता हुआ उसी प्रकार निष्फल पक रहा था। इसी प्रकार गोदावरी के जल से परिचित और तुम्हारी भुजा के स्नेह की लोभी प्रिय कलशी भी वहीं अपने स्थान पर रखी हुई मानो तुम्हारी प्रतीक्षा में उन्मुख हो रही थी। अर्थात् तुम इसी कलशी से प्रतिदिन गोदावरी से जल भरकर लाती थीं ।।१२।।

वेणीबन्धालकविलुलितैश्चम्पकैः शोकमग्नै–
र्मालाभङ्गच्युतकिसलयैः पाटलैः पीतवर्णैः ।
अङ्गभ्रष्टैः कथमपि तदा मार्गमेत्य प्रकीर्णैः,
सन्दिष्टं वै विवशहरणं ते प्रिये ! म्लानपुष्पैः ।। १३ ।।

हे प्रिये ! बंधी हुई वेणी के बालों से बिखरे हुये मानो शोक में डूबे चम्पकों ने तथा माला के टूटने से बिखरी पंखरी वाले पीले पड़े पाटल पुष्पों ने शरीर के अङ्गों से छूटे हुए और किसी प्रकार बलपूर्वक तुम्हे ले जाये जाने के कारण मार्ग में आकर बिखरे मुरझाए फूलों ने ही तुम्हारे विवशतापूर्ण हरण की पूरी बात कह दी थी ।।१३।।

तत्रायातैर्वनपरिसरात् तापसानां समूहै–
र्मामालोक्य व्यथितमनसा प्रोच्य सीतापहारम् ।
शोकोद्विग्नैरपि कथमिवाश्वासयद्भिः सखेदं,
भीतैरन्तः प्रकटितमिवातङ्कचिह्नं मुखेषु ।। १४ ।।

वहाँ वन्य क्षेत्र से आए हुए तपस्वी वर्ग ने मुझे देखकर व्यथित मन से सीताहरण की कथा कहकर, शोक से उद्विग्न किसी प्रकार खेद के साथ मुझे आश्वासन देते हुये भी, अन्दर से भयभीत होते हुए अपने मुखों पर मानों आतंक के चिह्न प्रकट कर दिए थे। अर्थात् हमारे रक्षक राम की ही भार्या का जब हरण हो गया तो हमारी क्या रक्षा हो पाएगी ।।१४।।

